# अग्निस्पर्शप्रसङ्गः

| | | |
|---|---|---|
| रामः | - भोः तिष्ठतु । किमर्थं सर्वे धावन्तः सन्ति ? | Hey, please wait, Why are all running? |
| सोमः | - तस्मिन् भवने अग्निस्पर्शः जातः अस्ति । भवान् अपि शीघ्रम् इतः दूरं गच्छतु । | There is a fire in that building. You also go far away. |
| रा - | अस्तु, तत्र अग्निस्पर्शः कथं सञ्जातः ? | Okay; how did the fire mishap occur ? |
| सो - | विद्युतः short circuit कारणेन । | Due to electrical short circuit. |
| रा - | तर्हि गत्वा प्रधानं स्विच् निर्वापयामः । अनन्तरम् अग्नि-शामकदलाय दूरवाणीं कुर्मः । धावनेन समस्यायाः परिहारः न भवति खलु ? | Then, lets go and off the main switch. Then we will telephone the fire force. Running away is not a solution to the problem. |
| सो - | अस्तु धावनं न कुर्मः । किन्तु अधुना अन्तः प्रवेशः कष्टकरः । अतः विद्युच्छक्तिजनानां कृते, अग्निशामकदलस्य कृते च दूरवाणीं कुर्मः । ते आगत्य अग्रिमं कार्यं करिष्यन्ति । | Okay, let's not run. But it is difficult to enter inside. Therefore let's telephone the officials of electricity board and fire fighting force. They will come and do the next work. |
| रा - | तथैव भवतु । अत्र समीपे दूरवाणीकेन्द्रं कुत्र अस्ति इति भवान् जानाति किम् ? | So be it. Do you know where the telephone booth is ? |
| सो - | आम् । अस्य एव मार्गस्य अन्ते एकं दूरवाणीकेन्द्रम् अस्ति । | Yes. There is a booth at the end of the road. |
| रा - | तर्हि, भवान् अपि मया सह आगच्छतु । उभौ अपि गत्वा दूरवाणीं करिष्यावः । | You also come along with me. Both of us will make the call. |
| सो - | तथैव अस्तु । चलतु तर्हि । | Let it be so. Let's go then. |

# वाक्यजिज्ञासा - १९

*(चिन्तनार्हविषययुक्तं वाक्यं, स्थूलाक्षरैः मुद्रितम् उपरि भवति । तस्य अधः तत्सम्बद्धं विवरणं भवति । ततः अन्यत् वाक्यं, पुनः विवरणम् । एवम् अत्र क्रमः ।*

*विवरणसन्दर्भे प्रथमं साररूपेण किञ्चित् उच्यते । अनन्तरं तस्य स्पष्टज्ञानार्थं शास्त्रीयं विवरणम् अपि दीयते । शास्त्रीयविवरणस्य ज्ञाने केचन क्लेशम् अनुभवेयुः । तादृशाः, वाक्येन, वाक्यद्वयेन, वाक्यैः वा प्रथमं दत्तं सारभागं पश्यन्ति चेदपि अलम् । तावता एव 'किं शुद्धम्' इति ज्ञायते । 'किमर्थम् एवम्' इति ये ज्ञातुम् इच्छन्ति तादृशानां कृते अग्रिमं विवरणम् ।)*

**६३. मध्यरात्रौ मार्गे जनाः न सञ्चरन्ति ।**

❑ **'मध्यरात्रे'** इति प्रयोगः साधुः । 'मध्यरात्रौ' इति अपशब्दः । रात्रिशब्दः यद्यपि इकारान्तः स्त्रीलिङ्गः, तथापि सः समासे क्वचित् अकारान्ततां प्राप्नोति (अच्प्रत्ययं प्राप्नोति ।) । 'अहःसर्वैकदेश ....' इति सूत्रेण रात्रिश्ब्दः एकदेशिवाचिना पदेन यदा समासं प्राप्नोति तदा तस्य पुंस्त्वं भवति । 'मध्य'शब्दः एकदेशवाची । अर्धपूर्वपरादयः शब्दाः अपि एकदेशवाचिनः एव । अतः 'मध्यरात्रः' 'अर्धरात्रः' इत्यादयः प्रयोगाः एव साधवः ।

**६४. मध्यरात्रे सः जागृतः अभवत् ।**

❑ **'जागरितः'** इति प्रयोक्तव्यम् । जागृतः इति पदम् असाधु । जागृ-निद्राक्षये इत्येतस्य धातोः क्तप्रत्यये कृते इट् भवति । स च धातुः सेट् । अतः जागरितः इत्येव प्रयोक्तव्यम् । 'उत्तिष्ठत जाग्रत ..' इत्यादीनाम् उपनिषदादिवाक्यानां श्रवणात् प्रादेशिकभाषाप्रभावात् वा क्वचित् 'जागृतः' इति प्रयोगः श्रूयते । स च असाधुः एव ।

**६५. नवरात्र्युत्सवः समग्रे देशे वैभवेन आचर्यते ।**

❑ **'नवरात्रोत्सवः'** इति प्रयोगः साधुः । सङ्ख्यापूर्वः रात्रिशब्दः अकारान्तः भवति । (सू- अहःसर्वैकदेश ...) स च नपुंसकः अपि भवति । (वा- सङ्ख्यापूर्वं रात्रं क्लीबम्) अतः नवरात्रादयः शब्दाः सिद्धाः भवन्ति । एकरात्रं, द्विरात्रं, त्रिरात्रं,

नवरात्रम् इत्यादीनि उदाहरणानि । नवरात्रम् इति उत्सवः = नवरात्रोत्सवः । (कर्मधारयसमासः, गुणसन्धिः च ।) यदि नवरात्रशब्दः इकारान्तः स्यात् तर्हि नवरात्र्युत्सवः इति रूपम् अभविष्यत् । किन्तु तादृशं रूपं नास्ति ।

६६. **शिवरात्रोत्सवदिने जनाः शिवपूजां कुर्वन्ति ।**

❑ **'शिवरात्र्युत्सवदिने'** इति प्रयोक्तव्यम् । 'शिवरात्रोत्सवदिने' इति प्रयोगः अनुचितः । 'अहःसर्वैकदेश ....' इति सूत्रेण ये शब्दाः पठिताः ते एव अकारान्तत्वं प्राप्नुवन्ति । शिवशब्दः तस्मिन् सूत्रे नास्ति । अतः 'शिव'पूर्वस्य रात्रिशब्दस्य न अकारान्तत्वम्, प्रत्युत इकारान्तत्वम् एव । अतः 'शिवरात्र्युत्सवदिने' इति प्रयोगः एव साधुः ।

'नवरात्रोत्सवदिने' इत्येतस्मिन् प्रयोगे रात्रिशब्दस्य अकारान्तत्वं दृष्ट्वा भ्रान्त्या कदाचित् शिवरात्रिशब्दस्य अकारान्तत्वं क्रियेत । वस्तुतः तु तस्य न अकारान्तत्वम् ।

६७. **'सः आगतः' इति उक्तः ।**

❑ **'सः आगतः'** इति उक्तम् इति वाक्यं साधु । क्तप्रत्ययान्तः उक्तशब्दः कर्मानुगुणं लिङ्गं प्राप्नोति ।

तद्यथा –
१. तेन रामः उक्तः ।
२. तेन सीता उक्ता ।
३. तेन मित्रम् उक्तम् ।
४. तेन शब्दः उक्तः ।
५. तेन कथा उक्ता ।
६. तेन वाक्यम् उक्तम् ।

उपर्युक्ते वाक्ये कर्म न उक्तम् । (अथवा 'इति'पदार्थः एव कर्म) ततः 'सामान्ये नपुंसकम्' इति न्यायेन 'उक्त'पदस्य नपुंसकत्वम् ।

'आगतः' इत्येतत् पदं पुंसि अस्ति इत्यतः 'उक्त'पदम् अपि पुंसि भवेत् इति भ्रमः स्यात् कदाचित् । वस्तुतः तु 'आगत'-'उक्त'पदयोः न विशेषणविशेष्य-भावादिसम्बन्धः । अतः 'उक्त'पदं 'आगत'पदस्य लिङ्गं न अनुसरति । अतः 'उक्त'पदस्य नपुंसकत्वम् एव ।



# चन्दमामा

जनवरी – १९९८



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००

# चन्दमामा

संस्थापकः - 'चक्रपाणिः'    सञ्चालकः - 'नागिरेड्डी'

## स्वातन्त्र्यसङ्ग्रामनिरताः संन्यासिनः

अस्माकं देशस्य स्वातन्त्र्यसङ्ग्रामस्य इतिहासस्य पृष्ठानाम् अवलोकनात् ज्ञायते यत् अष्टादशे शतके संन्यासिभिः कृतः सङ्ग्रामः अत्यन्तं प्रबलः आसीत् इति । संन्यासिनः समाजात् दूरे वने गुहादिषु उषित्वा तपः कुर्युः इति शास्त्रविधिः अस्ति । सर्वे संन्यासिनः तथैव आचरन्ति च । तादृशाः सर्वसङ्गपरित्यागिनः ते कस्य विरुद्धं सङ्ग्रामं कुर्युः, किमर्थं सङ्ग्रामं कुर्युः इत्यादयः प्रश्नाः सहजतया उद्भवन्ति खलु? संन्यासिनां सङ्ग्रामनिरतत्वस्य कारणम् अपि अस्ति ।

तस्मिन् समये भारतीयाः भूस्वामिनः आंग्लाः च सम्भूय भारतस्य पूर्वभागे बिहारबङ्गालराज्ययोः दरिद्राणां कृषकाणां शोषणं निष्करुणया कुर्वन्तः आस अतः एव संन्यासिनः अन्याय्यस्य विरोधं कर्तुं कार्यम् आरब्धवतः । तस्मि एव समये १८ शतकस्य सप्तमे दशके तेषु प्रदेशेषु क्षामः अपि आसीत् । किन्तु ईष्ट्-इण्डिया-संस्था कृषकाणां समस्याम् अवगन्तुम् एव न इष्टवती । सा जनेभ्यः अधिकाधिकं करं सङ्गृहीतवती । अन्ते तेषां समीपे करं दातुं धनमेव न आसीत् ।

एतत् सर्वं दृष्टवन्तः संन्यासिनः तीर्थक्षेत्राणां पर्यटनसमये - ''शोषकाणां विरोधं कुर्वन्तु'' इति जनान् प्रेरितवन्तः । यदा ब्रिटिष्जनाः तान् दमयितु पवित्रक्षेत्रेषु तेषां प्रवेशं निषिद्धवन्तः। अधुना संन्यासिनः साक्षात् रणरङ्गम् अवतीर्णवन्तः । ते स्वस्य अनुयायिभिः सह संस्थायाः वसतिम् आक्रम्य लुण्ठितवन्तः । केचन मुस्लिम्फकीराः अपि तैः सह मिलितवन्तः । भवानी-पाठक्, देवीचौधराणी, मञ्जुफकीर, मूषा षा कृपानाथः, चेरग् आलि इत्यादयः तत्र अग्रेसराः आसन् । देवीचौधराणी एका वीरमहिला आसीत् । सा नौकागृहे वसति स्म, यच्च नौकागृहं धनुर्धारिभिः भटैः सर्वदा रक्ष्यते स्म ।

एतस्य सङ्ग्रामस्य दमनम् अभवत् केषुचित् एव वर्षेषु । किन्तु बङ्किमचन्द्र-चटर्जी, देवीचौधराणी इत्यादिभिः स्वस्य लेखनद्वारा तस्य सङ्ग्रामस्य उज्जीवनं कृतम् । बङ्किमचन्द्रस्य आनन्दमठकाव्ये एव राष्ट्रभक्तेः प्रेरणास्त्रोतः 'वन्दे मातरम्' गीतम् अस्ति ।

सम्पुटः - १४    जनवरी - १९९८    सञ्चिका - १०

प्रतिकृतिमूल्यं रू. ६.००  *  वार्षिकं ग्राहकशुल्कं रू. ७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अतिशेते - over-take
अनतिदूरे - not very far
अनाक्रान्तः - unattacked
अनुज्ञा - permission
अभिव्यञ्जयति - to express
आवली - list
आवुत्तः - sister's husband
उत्तरीयम् - upper garment
उदरोपपीडम् - laugh till the stomach pains
उन्मत्तः - mad
उपहारः - gift / prize
उष्णीषम् - turban
काकविष्टा - excreta of crow
कासारः - pond
कुल्याः - canal
क्षुपः - shrub
गुहा - cave
ग्रन्थीकृत्य - having bundled
जामाता - son-in-law
झटिति - suddenly
तडागः - tank
त्रस्तः - frightened
त्वर्यताम् - hurry up
निर्वोढव्यम् - to be managed
निष्कण्टकः - lack of obstactes
पणीकृत्य - having pawned
प्रभवति - capable
भल्लूकः - bear (animal)
मस्तिष्कम् - brain
मानयति - make a person accept
मृगया - hunting
लिपिकारः - clerk
वराकः - poor fellow
विपरीतः - opposite
विवरीतुम् - to explain
विसंज्ञः - unconscious
वेष्टयति - encircle
सन्देहः - doubt
सम्मतिः - acceptance
स्कन्धः - shoulder

वार्ताविशेषः -

# पोलेण्डदेशे नूतनः सर्वकारः

पोलेण्डदेशे अधुना कम्युनिष्टेतरः सर्वकारः अधिकारसूत्रं गृहीतवान् अस्ति । गते सप्टेम्बर्मासे २१ तमे दिनाङ्के प्रवृत्ते निर्वाचने पोलेण्ड्जनाः सालिडारिटिपक्षं चितवन्तः सन्ति । क्रि.श. १९४५ तमे वर्षे द्वितीयमहायुद्धस्य अनन्तरं पोलेण्ड्देशे अधिकारं प्राप्तवान् कम्युनिष्ट्पक्षः चत्वारिंशत् वर्षाणि यावत् अनिर्बाधितरूपेण शासनं कृतवान्। पश्चात् पञ्चदशवर्षेभ्यः पूर्वं सालिडारिटिपक्षः अधिकारं प्राप्तवान् ।



क्रि.श. १९३९ तमे वर्षे जर्मन्देशस्य निरङ्कुशाधिकारी अडाल्फ् हिट्लरः पोलेण्डदेशं जितवान् । ततः द्वितीयमहायुद्धम् आरब्धम् । तदा सोवियत्यूनियन् - जर्मनिदेशयोः मध्ये शान्तिसन्धिः अभवत् । जपान्-इटलि-जर्मनिदेशानां अक्सिस्नामकं बलिष्ठं सङ्घटनं सञ्जातम् । अमेरिका, इग्लेण्ड्, फ्रान्स् इत्यादिदेशाः 'मित्रदेशाः' इति नाम्ना सङ्घटिताः अभवन् ।

षड्वर्षपर्यन्तं प्रवृत्ते युद्धे आरम्भे जयं प्राप्तवतः हिट्लरस्य काकदृष्टिः पोलेण्डदेशस्य पार्श्ववर्तिनः सोवियत्सङ्घस्य उपरि पतिता । अपायं ज्ञातवन्तः सोवियत्सङ्घजनाः 'मित्रदेशैः' सह मेलनीयम् इति निश्चितवन्तः । तेन युरोप्मध्ये उत्पन्नस्य आक्सिस्-सङ्घटनस्य जयस्य अवकाशः विपरीतः अभवत् । सोवियत्यूनियन्जनाः पोलेण्ड्देशेन सह अन्यान् अपि कांश्चन देशान् जर्मन्देशात् मोचितवन्तः । मित्रदेशीयानां सेना पश्चिमदिशा, सोवियत्यूनियन्सेना पूर्वदिशा च जर्मनिदेशस्य राजधानीं बर्लिन्नगरं प्रविष्टवती । तदा हिट्लरः आत्महत्यां कृतवान् । जर्मनिदेशः पूर्वजर्मनि पश्चिमजर्मनि चेति द्विधा विभक्तः अभवत् । बर्लिन्नगरम् अपि द्विधा विभक्तम् अभवत् । किन्तु १९४० तमे वर्षे जर्मनिदेशः पुनः एकीकृतः अस्ति ।

आत्मानं स्वतन्त्रं कृतवतः सोवियत्सङ्घस्य विषये पोलेण्डदेशस्य प्रजानां गौरवम् अभिमानः च उत्पन्नम् अभवत् । पोलेण्ड्देशे अपि कम्युनिष्ट्सर्वकारस्य अधिकारप्राप्त्यर्थं सोवियत्सङ्घेन प्रोत्साहः दत्तः । युद्धस्य अनन्तरं १९४८ तमे वर्षे प्रवृत्ते निर्वाचने कम्युनिष्ट्पक्षः जयं प्राप्तवान् । ३० वर्षाणाम् अनन्तरं सोवियत्-ट्रेड्यूनियन् आन्दोलनम् आरब्धमिति कारणेन तदा तदा सत्याग्रहाः सङ्घर्षाः च यद्यपि प्राचलन्, तथापि क्रि.श. १९८० तमवर्षपर्यन्तं कम्युनिष्ट्जनानां, तेषाम् अनुमोदकानां च शासनम् अनुवृत्तम् । क्रि.श. १९८३ तमवर्षे सालिडारिटिपक्षः बलिष्ठराजकीय-पक्षत्वेन प्रवृद्धः अभवत् । क्रि.श. १९८९ तमे वर्षे लेक्वलेसरस्य नायकत्वे कम्युनिष्टेतरसर्वकारः अधिकारारूढः अभवत् । किन्तु क्रि.श. १९९३ तमे वर्षे पुनः कम्यूनिष्ट्पक्षः एव जयं प्राप्तवान् । लेक्वलेसरः अपि अध्यक्षपदं परित्यक्तवान् ।

चतुर्णां वर्षाणाम् अनन्तरं मरिय एन् क्रसक् लूस्किवर्यस्य नायकत्वे सालिडारिटिपक्षः आश्चर्यकररूपेण पुनः अधिकारं प्राप्तवान् । जर्नि भूसेक्वर्यं प्रधानमन्त्रित्वेन चितवान् अस्ति सालिडारिटिपक्षः ।





# राक्षसस्य विवाहः

पूर्वं कोसलदेशस्य राजधान्यां शङ्करशास्त्री नाम महान् वाग्मी कश्चित् आसीत् । यद्यपि सः अधिक[illegible] न आसीत् [illegible] तथापि सः स्वस्य चतुरसम्भाषणेन सर्वान् हासयन् सर्वेषाम् आत्मीयः जातः आसीत् । तस्य आवुत्तः कोसलराज्यस्य आस्थान-पण्डितेषु अन्यतमः आसीत् । ब्रह्मचारी शङ्करशास्त्री गृहकार्ये भगिन्याः साहाय्यं कुर्वन् आवुत्तस्य गृहे एव वासं कृतवान् आसीत् ।

एकदा शङ्करशास्त्रिणः आवुत्तः स्वपत्नीम् उद्दिश्य - ''अये ! अस्माकं महाराजस्य पुत्र्याः स्वर्णलतायाः विवाहार्थं प्रयत्नः प्रचलन् अस्ति । विदेहराज्यस्य युवराजः एव जामाता भवतु इति अस्माकं महाराजस्य अपेक्षा । यतः विदेहराज्यम् अस्माकं राज्यात् अपि विशालम् । किन्तु विदेहराजपरिवारीयाः एतं विवाहप्रस्तावम् अङ्गीकुर्वन्ति वा न वा इति अस्माकं महाराजस्य सन्देहः अस्ति'' इति उक्तवान् ।

तदा शङ्करशास्त्रिणः अग्रजा - ''यदि मम अनुजः [illegible] एतत्कार्यार्थं प्रेषितः स्यात् तर्हि निश्चयेन सः स्ववाक्चातुर्येण कार्यं साधयिष्यति'' इति उक्तवती ।

''निश्चयेन । भवत्याः अनुजः अध्ययनात् ऋते अन्येषु सर्वेषु विषयेषु बहु चतुरः एव'' इति वदन् शङ्करशास्त्रिणः आवुत्तः उच्चैः हसितवान् ।

तत्रैव स्थित्वा सर्वं सम्भाषणं श्रुतवान् शङ्करशास्त्री चिन्तितवान् यत् कथमपि एषः विवाहः कारणीयः, महाराजात् एकः ग्रामः उपायनत्वेन प्राप्तव्यः च इति । अतः सः अनन्तरदिने एव गृहेस्थितं यं कमपि अनुक्त्वा सूर्योदयात् पूर्वम् एव विदेहराज्यं प्रति प्रस्थितवान् ।

कोसल-विदेहयोः मध्ये एकं गहनम् अरण्यम् आसीत् । तत्र कश्चित् राक्षसः वसन् आसीत् इति कारणेन जनाः अन्येन

'भामहः'

दूरमार्गेण एव गच्छन्ति स्म विदेहराज्यं प्रति ।

शङ्करशास्त्री अपि तेन दूरमार्गेण गच्छन् मध्याह्ने एकं तडागं प्राप्तवान् । तडागस्थं जलं पीत्वा सः तत्रैव वृक्षस्य अधः उपविष्टवान् । अल्पे एव काले तेन निद्रा प्राप्ता ।

किञ्चित्समयानन्तरं स्वपादनिक्षेपणेन भूमिं कम्पयन्ती काचित् राक्षसी तत्र आगता । ''भैरवखातस्य राक्षसानां तडागस्य जलं स्पृष्टवान् भवान् कः ?'' इति वदन्ती उच्चैः गर्जनं कृतवती सा ।

तस्याः गर्जनं श्रुत्वा शङ्करस्य शरीरे कम्पनम् आरब्धम् । 'मम मरणं सन्निहितम् एव' इति भावयन् कम्पमानः एव सः - ''हे अम्ब ! अहं शङ्करशास्त्री अस्मि । भैरवखातवासिन्याः भवत्याः बुभुक्षा-निवारणार्थम् एव विधिना अहम् अत्र प्रेषितः स्याम् । किन्तु विचित्रं नाम पूर्वजन्मनि आवयोः गोत्रं समानम् आसीत् । सगोत्राणां मांसं न भक्षणीयम् इति राक्षसपण्डिताः अपि अङ्गीकृतवन्तः सन्ति खलु ?'' इति राक्षसीम् उक्तवान् ।

तस्य वचनं श्रुत्वा राक्षसी करताडनं कुर्वती उच्चैः हसितवती । तदा तत्र विद्यमानात् गुल्मात् काचित् युवतिः राक्षसी बहिः आगत्य शङ्करशास्त्रिणं परीक्षात्मक-दृष्ट्या पश्यन्ती वृद्धराक्षसीम् उद्दिश्य - ''अम्ब ! अहं पूर्वमेव भवतीम् उक्तवती अस्मि यत् अहं मनुष्याणां मांसेन पाकं कर्तुं न शक्नोमि इति । भैरवखातस्य भिल्लववृद्धायाः सकाशात् अहं प्राणिनां मांसेन पाकं कर्तुम् एव ज्ञातवती अस्मि, न तु मनुष्यमांसेन'' इति उक्तवती ।

युवत्याः वचनेन शङ्करशास्त्रिणः मनसि



धैर्यम् उत्पन्नम् । ततः तस्य मनसि कश्चन उपायः अपि स्फुरितः । सः तां युवतिं राक्षसीम् अभिमानेन पश्यन् वृद्धराक्षसीम् उद्दिश्य - ''भोः, रूपेण भवत्याः पुत्री गन्धर्वकन्याम् अपि अतिशेते । तस्याः नाम किम् ? एतस्याः विवाहः इतोऽपि न अभवत् खलु ?'' इति पृष्टवान् ।

''मम पुत्र्याः नाम सुन्दरी । एतस्याः विवाहस्य विषये उत्पन्नायाः समस्यायाः कारणेन एव आवां तं खातं त्यक्त्वा आगतवत्यौ । तत्रत्याः सर्वे युवकाः राक्षसाः 'सुन्दरी मदीया' इति परस्परं वदन्तः कलहम् आरब्धवन्तः । कलहः अनुव[illegible] चेत् राक्षसजातिः एव समूलं विनश्येत् [illegible] भयेन एव आवां ततः पलायनं कृतवत्यौ'' इति उक्तवती वृद्धराक्षसी ।

तदा शङ्करशास्त्री नेत्रे निमील्य - 'अहो,

विधेः लीलां ज्ञातुं कः वा प्रभवति?' इति विचिन्त्य नेत्रे उन्मील्य - ''भोः, सुन्दर्याः योग्यः वरः इतः दशयोजनदूरे गहनारण्ये अस्ति । भवती यति इच्छति तर्हि अहं गत्वा तेन सह वार्तालापं कृत्वा तस्य अङ्गीकारं प्राप्स्यामि'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा वृद्धा राक्षसी सन्तोषेण - ''भोः, मनुष्य! भवान् निश्चयेन उत्तमः एव । यदि भवान् तेन सह मम पुत्र्याः विवाहं कारयिष्यति तर्हि अहं भवते अमूल्यानि मौक्तिकानि, रत्नानि च दास्यामि'' इति उक्तवती ।

''अम्ब ! अहम् इदानीम् एव प्रस्थितः । यतः एतं विवाहं कारयिष्यामि चेत् मया न केवलं रत्नमौक्तिकादीनि, अपि तु पुण्यम् अपि प्राप्यते'' इति उक्त्वा ततः प्रस्थाय विदेहराज्यस्य दिशि गच्छन् मध्ये एकस्य वृक्षस्य अधः उपविश्य चिन्तनम् आरब्धवान् - 'विदेहराजकुमारेण सह अस्माकं राजकुमार्याः विवाहकारणं तु कष्टकरम् एव । किन्तु अहं यथा एतां वृद्धां राक्षसीं मानितवान् तथैव यदि तं राक्षसम् अपि यदि मानयेयं तर्हि मम प्रभूता धनप्राप्तिः भविष्यति' इति ।

एवं चिन्तयित्वा सः शीघ्रं तत् गहनं वनं प्रविष्टवान् । तत्र सः विना कष्टं राक्षसस्य गुहाम् अभिज्ञातवान् । यतः गुहां परितः प्राणिनां शरीराणि, अस्थिपञ्जराणि च राशिरूपेण पतितानि आसन् ।

शङ्करशास्त्री इष्टदेवतां स्मृत्वा किञ्चित् धैर्यं प्राप्य गुहां प्रविष्टवान् । गुहायां राक्षसः सशब्दं निद्रां कुर्वन् आसीत् । तस्य समीपं गत्वा शङ्करशास्त्री -''भोः राक्षसोत्तम! अहं शङ्करशास्त्री भवतः हितं कर्तुम् आगतः अस्मि'' इति उक्तवान् ।

तदा राक्षसः झटिति जागरितः सन्



प्रविष्टवान्, शङ्करशास्त्रिणम् उक्तवान् च - "भोः! मादृशं राक्षसम् आहूय उत्थापितवतः भवतः साहसम् अहम् अभिनन्दामि । तदर्थम् अत्र कोणे विद्यमानः रत्नानां राशिः एव भवते दातव्या इति इच्छा अस्ति मम । परन्तु तेन किं वा प्रयोजनम् ? तत् अनुभोक्तुम् एकस्याः घण्टायाः अनन्तरं भवान् एव न भविष्यति खलु ?'' इति उक्तवान् ।

राक्षसस्य वचनेन यद्यपि शङ्करशास्त्री भीतः, तथापि भीतिम् अप्रदर्शयन् - ''भोः राक्षसराज ! भवान् माम् अभिनन्दितवान् यत् तदर्थं भवते धन्यवादान् समर्पयामि । ये हितं कर्तुम् आगच्छन्ति तेषाम् अहितं न करणीयम् इति राक्षसानां सम्प्रदायः खलु ? भवान् अधुना अपि निद्रायाः प्रभावात् मुक्तः नास्ति । अतः भवान् तं विषयं न स्मृतवान् इति अहं भावयामि'' इति उक्तवान् ।

तदा राक्षसः उच्चैः हसन् - ''भोः शङ्कर ! कियत् सम्यक् भाषते भवान् ! प्राणभयम् अपि परित्यज्य भवान् एतावद्दूरं किमर्थम् आगतः ? भवान् मम कीदृशं हितं कर्तुम् इच्छति ? वदतु तावत्'' इति उक्तवान् ।

''भवतः निमित्तम् एकां सुन्दरीं योग्यां वधूं दृष्ट्वा आगतवान् अस्मि'' इति उक्तवान् शङ्करशास्त्री मन्दहासेन सह ।

''मम निमित्तं वधूम् अन्विष्टवान् अस्ति वा भवान् ? भवान् मां न उपहसति खलु ? अस्य शङ्खग्रीवस्य मम जातके विवाहयोगः एव नास्ति इति अहं चिन्तितवान् आसम्'' इति उक्तवान् राक्षसः आश्चर्येण ।

''भोः शङ्खग्रीवप्रभो ! ग्रहगतयः अपि कालप्रभावतः तदा तदा परिवर्तिताः भवन्ति । तत् शास्त्रसम्मतम् अपि । अहं तु भवतः विवाहं कारयितुम् एव आगतवान्





एतानि रत्नानि न केवलम् अस्माभिः सह नेष्यामः, अपि नु मम विवाहः भविष्यति चेत् भवान् एव तानि स्वीकृत्य गन्तुमर्हति'' इति उक्तवान् राक्षसः उच्चैः हसन् ।

शङ्करः स्वस्य उत्तरीयेण तानि सर्वाणि रत्नानि बद्ध्वा स्वीकृत्य राक्षसस्य स्कन्धम् आरूढवान् । रात्रेः पूर्वमेव तौ द्वौ अपि वृद्धराक्षस्याः स्थानं प्राप्तवन्तौ ।

दूराद् एव आगच्छन्तं शङ्खग्रीवं दृष्टवती वृद्धराक्षस्याः पुत्री सुन्दरी मातरम् उद्दिश्य - ''वरः अन्धकारात् पूर्वमेव प्राप्तवान् यत् तत् उत्तमम् एव अभवत् । अन्यथा अन्धकारे तस्य रूपं ज्ञातुम् अपि कष्टम् एव अभविष्यत्'' इति उक्तवती ।

तदा वृद्धराक्षसी उदरोपपीडं हसन्ती - ''किं भोः, वरः तावान् कृष्णः इति भवती वदति किम् ? वयं राक्षसाः तु रात्रौ एव मृगयां कुर्मः खलु ? अतः यदि वरः श्वेतः स्यात् तर्हि सः एकमपि मृगं न प्राप्नुयात्'' इति उक्तवती ।

तावति काले राक्षसः शङ्करशास्त्री च तत्र प्राप्तवन्तौ । राक्षसः सुन्दरीं दृष्ट्वा - ''अहो ! कीदृशं सौन्दर्यम् ! राक्षसरूपधारिणी मोहिनी इव अस्ति एषा । मम एषः विवाहः सम्मतः'' इति उक्तवान् ।

वृद्धराक्षसी स्वपुत्रीम् - ''वत्से ! अस्मिन् विषये भवत्याः अभिप्रायः कः?'' इति पृष्टवती ।

''ज्येष्ठाः यत् वदन्ति तत् कनिष्ठानां सम्मतम् एव भवति'' इति मन्दम् उक्तवती सुन्दरी लज्जया किञ्चित् पृष्ठतः उपविशन्ती ।

तदा सा वृद्धराक्षसी पुत्रीं सुन्दरीं, शङ्खग्रीवं च स्वसमीपम् आहूय उभयोः हस्तौ

अस्मि'' इति उक्त्वा वृद्धराक्षस्याः, तस्याः सुन्दर्याः चतुरायाः पुत्र्याः च विषये सर्वम् उक्तवान् ।

तत् श्रुत्वा राक्षसः सन्तोषेण नृत्यन् - ''भोः, त्वर्यताम्, त्वर्यताम् । भवान् अधुना एव मम स्कन्धे उपविशतु । तदा आवां शीघ्रमेव तत् वनं प्राप्तुं शक्नुवः'' इति उक्तवान् ।

तस्य तद्वचनं श्रुत्वा शङ्करशास्त्री गुहायां कोणे प्रकाशमानं रत्नानां राशिम् आशया पश्यन् - ''भोः, राक्षसेन्द्र ! एषु दिनेषु मनुष्याः धनार्थं महत् अपि साहसं कर्तुं सिद्धाः दृश्यन्ते । अतः वयम् एतानि रत्नानि वस्त्रेण बद्ध्वा अस्माभिः सह एव नयाम वा?'' इति पृष्टवान् ।

''मम गुहां प्रति चोराः कथं वा आगच्छन्ति ? भवान् बहु बुद्धिमान् अस्ति ।

योजितवती ।

तत् दृष्ट्वा शङ्करशास्त्री - ''पाणिग्रहणं जातं चेत् विवाहः सम्पन्नः इव'' इति उक्त्वा सन्तोषेण करताडनं कुर्वन् वृद्धराक्षसीम् उक्तवान् - ''अम्ब ! मह्यं यत् दानम् अङ्गीकृतम् आसीत् तत् भवती न विस्मृतवती खलु ? '' इति ।

''कथं वा विस्मरेयम्?'' इति वदन्ती वृद्धराक्षसी रत्नमौक्तिकादीनां स्यूतम् एकम् आनीय शङ्कराय दत्तवती ।

शङ्करः तं स्यूतं स्वीकृत्य एकवारं तान् सर्वान् नमस्कृतवान् । अनन्तरं राक्षसम् उद्दिश्य - ''भोः, राक्षसेन्द्र ! भवान् इतःपरं एकाकी न, अपि तु सपत्नीकः । अहं भवन्तम् एकं रहस्यं वदामि । शृणोतु तावत् । अस्माकं महाराजः ज्ञातवान् अस्ति यत् अरण्ये न केवलं क्रूरप्राणिनः, अपि तु भवन्तः अपि प्रजाः पीडयन्तः सन्ति इति । अतः राजा महता सैन्येन सह आक्रमणं करिष्यति । तदर्थम् इतः परम् अन्यत्र भवतः गमनं वरम् इति अहं भावयामि । श्वः प्रातः एव इतः भैरवखातं प्रति, शार्दूलखातं प्रति वा प्रस्थानं वरम्'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा राक्षसः कोपेन हुङ्कुर्वन्, पादेन भूमिं प्रहरन् - ''तृणप्रायेभ्यः मानवेभ्यः भीत्वा अहं मम गुहां परित्यज्य पलायनं करोमि किम् ?'' इति उक्तवान् ।

तदा शङ्करशास्त्री विनयेन - ''हे राक्षसोत्तम ! भवान् इतः पलायनं करोतु इति न वदामि । किन्तु अधुना भवतः परिवारः विशालः जातः इति कारणेन एषा गुहा पर्याप्ता न भवति । योग्यां गुहाम् अन्विष्य भवान् प्रयाणं करोतु इति मम कथनस्य तात्पर्यम्'' इति राक्षसम् उक्त्वा - ''मया उक्तं युक्तं खलु अम्ब !'' इति वृद्धराक्षसीम् पश्यन् उक्तवान् ।

तदा वृद्धा राक्षसी -''शङ्करः युक्तमेव उक्तवान् अस्ति । वयम् अधुना एव प्रस्थानं करिष्यामः'' इति वदन्ती ततः प्रस्थितवती ।

पुत्री सुन्दरी अपि यदा मातरम् अनुसृतवती तदा राक्षसः अपि तूष्णीं ते अनुसृतवान् । तेषां गमनं पश्यन् शङ्करशास्त्री अपि ततः प्रस्थितवान् । स्कन्धद्वये अपि स्यूतद्वयं वहन् श्रान्तः सः - ''दारिद्र्यं केवलं क्लेशं जनयति इति चिन्तितवान् आसम् । परन्तु सम्पत्तिः अपि क्लेशं जनयति इति इदानीं ज्ञातम्'' इति स्वगतं वदन् अग्रे गतवान् ।



# उत्तमं काव्यम्

रत्नपुर्यां सर्वदा कवीनां मान्यता आसीत् । प्रसिद्धानां कवीनां नाम ख्यातिं च श्रुत्वा अनेके जनाः पाण्डित्यरहिताः सन्तः अपि 'महाराजः अस्मान् सम्मानयेत्' इति आशया स्वयं कविताः रचयितुम् उद्युक्ताः अभवन् ।

कुलशेखरः रत्नपुरीराज्यस्य आस्थानकविः आसीत् । अनेके कवयः स्वरचितैः काव्यैः सह तस्य समीपं गत्वा - 'महाराजस्य दर्शनं कारयतु' इति प्रार्थयन्ति स्म ।

रत्नपुर्याः समीपे स्थिते ग्रामे देवपुर्याम् उत्तमाः कवयः यथा, तथा कविताज्ञानशून्याः, काव्यरचयितारः अपि आसन् । कुमारशर्मा तादृशेषु अन्यतमः । कदाचित् सः स्वरचितं काव्यद्वयं स्वीकृत्य कुलशेखरं द्रष्टुं गतवान् ।

उभयोर्मध्ये अन्यतरत् चित्वा महाराजाय अर्पणीयम् इति कुमारशर्मणः इच्छा आसीत् । कुलशेखरस्य अनुज्ञां प्राप्य कुमारशर्मा स्वस्य प्रथमं काव्यं तस्य पुरतः पठितवान् ।

महाप्रयासेन घण्टाद्वयं यावत् तस्य काव्यं कुलशेखरः श्रुतवान् । यदा कुमारशर्मा द्वितीयस्य काव्यस्य वाचनम् आरब्धवान्, तदा कुलशेखरः - ''कविवर्य ! भवतः द्वितीयस्य काव्यस्य पठनस्य आवश्यकता एव नास्ति । प्रथमकाव्यं श्रुत्वा एव वक्तुं शक्यते यत् एतदपि उत्तमं काव्यम् इति । अतः भवान् गन्तुम् अर्हति'' इति उक्त्वा तं प्रेषितवान् ।

स्वकवितापाण्डित्यं कीदृशम् इति तस्य कथनेन ज्ञातवान् कुमारशर्मा लज्जया कुलशेखरं प्रणम्य मौनेन स्वगृहं प्रति प्रस्थितवान् ।





# सम्राट् अशोकः ११

*(पाटलीपुत्रे राज्ञः बिन्दुसारस्य आरोग्यं चिन्ताजनकं जातम् । तक्षशिलास्थं सुषेणम्, उज्जयिनीस्थम् अशोकं च आनेतुं प्रधानमन्त्री भटान् प्रेषितवान् । सुषेणस्य प्रयाणे विलम्बः यथा स्यात् तथा कर्तुं यशः उभे नर्तक्यौ प्रेषितवान् । उज्जयिनीम् आगतः सः ज्योतिषिकवेषेण आगतस्य सुषेणमित्रस्य रहस्यं भेदितवान् । 'अविलम्बेन प्रस्थातव्यम्' इति पाटलीपुत्रतः यदा वार्ता प्राप्ता तदा - 'ससैन्यं भवता प्रस्थातव्यम्' इति वदन् यशः अशोकस्य सम्मतिं प्राप्तवान् । तदनन्तरम् ......)*

अशोकः पाटलीपुत्रं प्रति गन्तुं सन्नाहं कुर्वन् एतस्याः वार्तायाः निवेदनार्थं दलपतीन् आहूतवान् । यशः आगतान् दलपतीन् उक्तवान् - "मित्राणि, अस्माभिः जागरूकतया कर्तव्यं निर्वोढव्यम् अस्ति । अस्माकं कार्यमेव मगधसाम्राज्यस्य भविष्यं निर्णेष्यति । चन्द्रगुप्तमौर्येण स्थापितं साम्राज्यं पश्यताम् अस्माकं नाशदशां गच्छेत्, उत विकासं प्राप्नुयात् इति निर्णेतव्यम् अस्ति इदानीम्" इति ।

"मगधसाम्राज्येन कीदृशी कष्टस्थितिः सम्मुखीकरणीया आपतिता ? अस्माकं शत्रुः कः ?" इति पृष्टवान् सेनाधिपतिः ।

"मित्राणि !. वयं बाह्यशत्रुभिः सह बहुधा युद्धं कृतवन्तः स्याम । किन्तु इदानीं युद्धं न बाह्यशत्रुणा सह, अपि तु अन्तःशत्रुणा सह । स च शत्रुः अस्माकं राज्ये एव अस्ति, राजकुले एव अस्ति ।



स्वार्थसाधकाः केचन सहायकाः अपि सन्ति तस्य । एते अन्तःशत्रवः घोरतराः सन्ति । बाह्यशत्रोः सम्मुखीकरणार्थं धैर्यमात्रं पर्याप्तम् । किन्तु अन्तःशत्रोः सम्मुखी-करणार्थं धैर्यस्य निष्कपटराजभक्तेः च आवश्यकता अस्ति । प्रकृतम् अनुसराम । अस्माकं चक्रवर्तिनः आरोग्यं नितरां क्षीणम् अस्ति । कस्मिंश्चित् अपि क्षणे तस्य दिवङ्गतिः सम्भवेत् । तदनन्तरं सिंहासनस्य आरोहणं कः कुर्यात् ? एतद्विषये भवताम् आशयः कः ?'' इति पृष्टवान् यशः ।

क्षणकालस्य मौनस्य अनन्तरम् उक्तवान् कश्चन दलपतिः - ''युवराजस्य सुषेणस्य राज्याभिषेकः करणीयः इति महाराजेन निर्णीतम् इति श्रूयते । किन्तु तथा न भवेत् इति भावयामः वयम्'' इति ।

''किमर्थं तथा भावयन्ति भवन्तः ?'' इति पृष्टवान् यशः ।

''स्पष्टोक्त्यर्थं क्षन्तव्यः अहम् । युवराजः सुषेणः दुष्टः अविवेकी चापि । पूर्वं कश्चन सैनिकः तस्य अङ्गरक्षकत्वेन नियुक्तः आसीत् मया । कदाचित् काकविष्टा युवराजस्य उपरि पतिता । ततः क्रुद्धः युवराजः तस्य सैनिकस्य मरणदण्डनं विहितवान् । एतादृशः शीघ्रकोपी अविवेकी यदि राजा भवेत् तर्हि प्रजानां महती दुर्गतिः भवेत्'' इति उक्तवान् सः दलपतिः ।

''एवं तर्हि कः राज्यस्य उत्तराधिकरी भवेत् ?'' इति पृष्टवान् यशः ।

''कः अन्यः, ऋते अशोकात् ? सिंहासनारोहणार्थम् अपेक्षिताः सर्वाः योग्यताः सन्ति एव तस्य । अतः सः एव मगधसाम्राज्यस्य महाराजः भवेत्'' इति उक्तवान् सः दलपतिः ।

अन्ये सर्वे उत्साहस्वरम् उत्पादयन्तः तस्य कथनं समर्थितवन्तः ।

''भवतां कथनं न्याय्यम् इति अहम् अपि अवगच्छामि । यद्यपि युवराजस्य अशोकस्य सिंहासनारोहणं न्याय्यम् अस्ति, तथापि तदर्थं स्थितः मार्गः न निष्कण्टकः । वस्तुतस्तु खड्गबलेन अस्माभिः मार्गः निर्मातव्यः अस्ति । तदर्थं धैर्यं, साहसं, त्यागः इत्यादयः आवश्यकाः । प्राणान् पणीकृत्य अपि युद्धं करणीयं भवेत् । प्राणपणीकरणार्थं किं सिद्धाः भवन्तः ?'' इति पृष्टवान् यशः ।

''युवराजार्थं, मगधसाम्राज्यस्य हितार्थं च प्राणपणीकरणम् अस्माकं सन्तोषाय

एव'' इति उक्तवन्तः सर्वे दलपतयः ।

अत्रान्तरे युवराजः अशोकः तत्र आगतः । ''मगधसाम्राज्यस्य भावी महाराजः अशोकवर्यः जयतात्'' इति जयकारं कृतवान् सेनाधिपतिः । सर्वे दलपतयः युवराजं नमस्कृतवन्तः ।

''इतः परं क्षणमात्रस्य अपि विलम्बः न करणीयः । अत्र कैः स्थातव्यम् इति सेनाधिपतिः एव निश्चयं करोतु । अत्र स्थिताः दलपतयः जागरूकतया राजभवनं रक्षेयुः । अन्ये सर्वे सैन्येन सह पाटलीपुत्रं प्रति प्रयाणं कुर्युः'' इति आदिष्टवान् यशः । दलपतयः सर्वे हस्तम् उन्नीय अङ्गीकारं सूचितवन्तः ।

''मित्राणि ! पितामहेन स्थापितस्य एतस्य साम्राज्यस्य संरक्षणार्थं भवन्तः यत् साहाय्यम् आचरन्तः सन्ति तत् कदापि न विस्मरामि'' इति उक्तवान् अशोकः ।

* * *

''प्रभो ! महाराजः भगवतः पादमूलं श्रितवान्'' इति वदन् कश्चन सैनिकः अन्तः आगतवान् ।

प्रकोष्ठे ग्रीक्वणिग्भ्यां सह उपविश्य मद्यपाने मग्नः सुषेणः मुखम् उन्नीय तं सैनिकम् असन्तोषेण दृष्टवान् । सुषेणस्य पुरतः पीठे कान्तियुक्तम् रत्नं विराजमानम् आसीत् ।

''एषा वार्ता आनीता यत् तदर्थम् एतत् अपूर्वं रत्नं मया उपायनरूपेण दीयते इति भावयति वा भवान् ? अन्तः आगमनार्थं भवते कः मूर्खः अनुमतिं दत्तवान् ?'' इति कोपेन पृष्टवान् सुषेणः ।



''अनुज्ञा तु भवता एव दत्ता आसीत् प्रभो ! प्रधानमन्त्रितः या काऽपि वार्ता आगता चेत् अचिरात् एव अन्तः आगत्य सा निवेदनीया इति भवता एव सूचितम् आसीत्'' इति उक्तवान् पार्श्वस्थः आप्तमार्गदर्शकः सुबाहुः ।

''एवम् !'' इति उक्त्वा क्षणकालस्य अनन्तरं पृष्टवान् सुषेणः – ''किं मम पिता दिवङ्गतः ?'' इति ।

''आं प्रभो, पाटलीपुत्रतः प्रधानमन्त्रिणा तथा वार्ता प्रेषिता अस्ति'' इति उक्तवान् सुबाहुः ।

''प्रधानमन्त्री ! अहं यदा पट्टाभिषिक्तः भविष्यामि तदा तं प्रधानमन्त्रिणं भल्लातकं कासारे मज्जयिष्यामि'' इति वदन् सुषेणः उत्थाय ग्रीक्वणिजौ उद्दिश्य – ''अस्तु,



पुनर्मिलाम तावत्'' इति उक्तवान् ।

तयोः वणिजोः दृष्टिः पीठस्थे रत्ने लग्ना आसीत् । 'तक्षशिलायां वाणिज्यं कर्तुम् अनुमतिः प्राप्येत' इति विचिन्त्य ताभ्यां तत् रत्नम् उपायनीकृतम् आसीत् । किन्तु अनुमतिपत्रं न प्राप्तम् आसीत् एतावता अपि । अतः चिन्ताक्रान्तौ आस्तां तौ ।

सुषेणः तत् रत्नं स्वीकृत्य - ''अन्यानि अपि रत्नानि गृहीत्वा पुनः आगच्छन्तु भवन्तः । तदा तक्षशिलायां, समग्रे मगधसाम्राज्ये चापि वाणिज्यं कर्तुम् अनुमतिं दास्यामि'' इति मन्दहासपूर्वकम् उक्तवान् ।

वणिजौ मौनेन तत्रैव स्थितवन्तौ ।

''मया उक्तम् अवगतं खलु ?'' इति पृष्टवान् सुषेणः ।

''भवतः पट्टाभिषेकः निर्विघ्नं प्रचलतु इति आशास्महे वयम्'' इति उक्तवन्तौ तौ वणिजौ ।

''तदर्थम् एव अहम् इदानीं पाटलीपुत्रं प्रति प्रस्थितवान् अस्मि । सुबाहो ! दलपतीन् सर्वान् अत्र आह्वयतु । अङ्गरक्षकैः सह गमनं पर्याप्तम्, उत सैन्येन सह गन्तव्यम् इति चिन्तयन् अस्मि अहम्'' इति उक्तवान् सुषेणः ।

''ससैन्यं गमनम् एव वरम्'' इति ध्वनिः पृष्ठभागतः श्रुतः । सुषेणः परिवृत्य दृष्टवान् । तत्र सः पाटलीपुत्रवासिनं गूढचारं दृष्टवान् । सः गूढचारः वेगेन श्वासोच्छ्वासं कुर्वन् आसीत् ।

''किमर्थं श्वासोच्छ्वासः एवं सवेगम् ? का एषा त्वरा भवतः ?'' इति पृष्टवान् सुषेणः ।

''प्रभो ! अहम् इदानीं पाटलीपुत्रतः आगच्छन् अस्मि । प्रमुखा वार्ता आनीता अस्ति मया । युवराजः अशोकः एतावता एव पाटलीपुत्रं प्राप्नुवन् अस्ति'' इति उक्तवान् सः गूढचारः ।

''असम्बद्धं मा प्रलपतु । भवता यस्य नामग्रहणं कृतं सः तु उत्थातुम् अपि अशक्नुवन् मांसपिण्डम् इव उज्जयिन्यां पतितः अस्ति'' इति उक्तवान् सुषेणः ।

''प्रभो ! अश्वम् आरुह्य ससैन्यं गच्छन्तं तम् अहं प्रत्यक्षं दृष्टवान् अस्मि'' इति उक्तवान् गूढचारः ।

''सत्यम् एतत् !'' इति आश्चर्येण पृष्टवान् सुषेणः ।

''मम वचनम् असत्यम् इति प्रमाणितं भवति चेत् भवान् माम् अपि जले पातयितुम्

अर्हति'' इति उक्तवान् गूढचारः ।

''एवं तर्हि ताभ्यां नर्तकीभ्याम् अहं किं वञ्चितः ? कः तत्र ? ते नर्तक्यौ आनयतु अत्र'' इति कोपेन उक्तवान् सुषेणः ।

''ते कुत्र स्तः ?'' इति पृष्टवान् सुबाहुः ।

''तत् कथम् अहं जानामि ? मत्तः पारितोषिकं प्राप्य ते गतवत्यौ । अत्रैव नगरे कुत्रापि ते स्याताम् । अस्माकं सैनिकाः किं तयोः अन्वेषणं कर्तुं न शक्नुवन्ति ?'' इति पृष्टवान् सुषेणः ।

अत्रान्तरे अपरः गूढचारः आगत्य सुषेणं नमस्कृतवान् । सः उज्जयिनीतः आगतवान् आसीत् । तं दृष्ट्वा सुषेणः पृष्टवान् - ''युक्ते समये आगतः भवान् । अशोकः पाटलीपुत्रं प्रति प्रस्थितवान् अस्ति इति निवेदयितुं खलु भवान् अत्र आगतवान् ?'' इति ।

''आम् । एषा वार्ता भवता मम आगमनात् पूर्वम् एव प्राप्ता इति तु सन्तोषस्य विषयः । अशोकः पाटलीपुत्रं प्रति यदा प्रस्थितः तदा अहम् उज्जयिनीतः प्रस्थितः'' इति उक्तवान् गूढचारः ।

''धिक् ते नर्तक्यौ । किम् अशोकः पार्श्ववायुपीडाग्रस्तः न जातः ?'' इति आश्चर्येण पृष्टवान् सुषेणः ।

''पार्श्ववायुपीडा सर्वथा नास्ति तस्य । अशोकः तु पूर्वं यथा आसीत् ततोऽपि दृढकायः आरोग्यवान् च अस्ति । अश्वम् आरुह्य गच्छन् सः मया प्रत्यक्षं दृष्टः'' इति उक्तवान् गूढचारः ।

''एवं तर्हि ते नर्तक्यौ मां वञ्चितवत्यौ । धिक् ते । ते गृहीत्वा छित्त्वा शकलीकृत्य



क्षिपन्तु । शृगालशुनकादयः गृध्रादयः च खादन्तु नाम । अथवा सजीवं दहन्तु ते । शिरच्छेदं वा कुर्वन्तु ...'' इति उद्वेगेन उक्तवान् सुषेणः ।

* * *

सूर्यास्तसमयः आसन्नः । राज्ञः बिन्दुसारस्य भौतिकं शरीरं नदीतीरं प्रति आनीतम् । तस्य षट् पुत्राः तत्रैव आसन् । राज्ञः चितायाः अग्निस्पर्शं कः कुर्यात् इत्येषः निर्णयः इतोऽपि न कृतः आसीत् ।

''षड् अपि पुत्राः युगपत् तत् कार्यं कर्तुम् अर्हन्ति खलु ?'' इति प्रधानमन्त्रिणम् उक्तवान् सेनाधिपतिः ।

प्रधानमन्त्री राजपुरोहितं पृष्टवान् - ''अग्निस्पर्शकालः सन्निहितः किम् ?'' इति ।



''तदर्थम् इतोऽपि घण्टात्मकः कालः अवशिष्टः'' इति उक्तवान् राजपुरोहितः ।

''अशोकः नगरसमीपम् आगतः अस्ति इति वार्ता प्राप्ता अस्ति मया । सुषेणः अनुपस्थितः चेत् अशोकेन एव अग्नि-स्पर्शावकाशः प्राप्यते । अतः अशोकः एव अग्निस्पर्शं करोतु इति अहं भावयामि'' इति उक्तवान् प्रधानमन्त्री ।

''आम् । तदेव धर्मसम्मतं, व्यवहार-सम्मतं, प्रजासम्मतं च'' इति उक्तवान् राजपुरोहितः ।

''अहो ! युवाराजः अशोकः उपस्थितः एव !'' इति उक्तवन्तः दूरस्थाः जनाः । ''युवराजः अशोकः जयतत्'' इति जयघोषं कृतवन्तः ते ।

एतत् श्रुत्वा षड् अपि राजकुमाराः मौनेन ततः अदृश्याः जाताः । अल्पे एव काले दूरे कोलाहलः हाहाकारः च श्रुतः ।

''किं तत्र प्रचलति ?'' इति पृष्टवान् प्रधानमन्त्री ।

''षण्णां राजकुमाराणाम् आज्ञां पालयन्तः केचन सैनिकाः अशोकस्य आगमनं निवारयन्तः सन्ति । अशोक-सैनिकाः तैः सह युद्धं कुर्वन्तः दृश्यन्ते'' इति धावन् आगत्य उक्तवान् कश्चन प्रासादरक्षकः अधिकारी ।

''हा हन्त ! एतादृशे अपि अवसरे कोऽयं राजकुमाराणां कलहः ! सर्वं विचित्रम् !'' इति सखेदम् उक्तवान् राजपुरोहितः ।

सेनाधिपतिः उन्नते स्थाने तिष्ठन् उच्चस्वरेण - ''अस्माकं सैनिकेषु कोऽपि अशोकस्य आगमने प्रतिरोधं न कुर्यात् । यः तथा करोति सः शिरच्छेदेन दण्ड्यते '' इति आज्ञापितवान् ।

राजकुमाराः तावत् उत्कोचदानेन कांश्चन दलपतीन् पूर्वम् एव वशीकृतवन्तः आसन् । दलपतिपक्षासमर्थकाः केचन सैनिकाः अशोकस्य आगमने विरोधं कुर्वन्तः आसन् । अशोकम् अनुसृत्य महती सेना आगच्छन्ती अस्ति इति वराकाः ते न जानन्ति स्म ।

''यः युवराजस्य अशोकस्य विरोधं करोति तं निर्दयं मारयन्तु भवन्तः'' इति सैनिकान् आज्ञापितवान् यशः ।

''युवराजः अशोकः येनकेनचित् वा प्रयत्नेन रक्षणीयः एव इति अहम् अस्मत्सैनिकान् सर्वान् आज्ञापयन् अस्मि''

इति उच्चस्वरेण उक्तवान् सेनाधिपतिः ।

''ते षड् राजकुमाराः सुषेणस्य आगमनं निरीक्षमाणाः सन्ति, अशोकः तेभ्यः न रोचते इति अहं जानामि स्म । किन्तु एतादृशे अवसरे एवम् अविवेककृत्यं कुर्युः इति तु सर्वथा न जानामि स्म'' इति उक्तवान् प्रधानमन्त्री ।

''दहनसंस्कारकालः तु सन्निहितः। इदानीं किं वा करणीयम् इति तु न ज्ञायते'' इति उक्तवान् राजपुरोहितः ।

अत्रान्तरे तत्र उपस्थितः अभवत् अशोकः ।

''स्वागतं युवराजस्य । एतस्मिन् समये भवता एतादृशी स्थितिः सम्मुखीकरणीया अभवत् यत् तदर्थं विषीदामि । सुदैवात् भवान् निरपायः सन् अत्र उपस्थितः यत् तत् तु महते सौभाग्याय'' इति उक्तवान् प्रधानमन्त्री ।

''पितुः चितायाम् अग्निस्पर्शं करोतु भवान्'' इति अशोकं सूचितवान् राजपुरोहितः ।

अल्पे एव काले दहनसंस्कारः यथाविधि सम्पन्नः ।

''सिंहासनं कदापि रिक्तं न तिष्ठेत् । यः चितायाम् अग्निस्पर्शं कृतवान् सः एव सिंहासनस्य उत्तराधिकारी भवेत् । अ[illegible] रात्रौ एव भवतः पट्टाभिषेकः भवतु । तदर्थं सर्वः सन्नाहः कृतः अस्ति'' इति अशोकम् उक्तवान् प्रधानमन्त्री ।

''अहं शासनभारं स्वीकरोमि इदानीम् एव । किन्तु पट्टाभिषेकः मास्तु इदानीम् । अधिकारिणः, प्रजाप्रमुखाः, सामन्ताः, सर्वाः प्रजाः च मम सिंहासनारोहणम् इच्छन्ति, उत न इति ज्ञातव्यं खलु मया आदौ एव'' इति उक्तवान् अशोकः गम्भीर-स्वरेण ।

''उन्नतं लक्ष्यम् अभिव्यञ्जयन्ति एतानि भवदीयानि वाक्यानि'' इति उक्तवान् प्रधानमन्त्री ।

अशोकं मारयितुम् उद्युक्ताः सर्वे घण्टाभ्यन्तरे यमलोकातिथयः जाताः । ते षट् राजकुमाराः अपि मरणं प्राप्तवन्तः आसन् एतस्मिन् युद्धे । प्रासादे शोकच्छाया प्रसृता प्रासादस्थानां सर्वेषां मुखात् दुःखाश्रूणि निर्गतानि ।

- (अनुवर्तते)






# गुरुदक्षिणा

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! एतादृशे मध्यरात्रे येन शयनमन्दिरे हंसतूलिकातल्पे निद्रासुखम् अनुभवितव्यम् आसीत् तेन भवता विषसर्पाणां भूतप्रेतादीनां च वासस्थाने एतस्मिन् श्मशाने किमर्थं भूयते इति मया न ज्ञायते । भवद्द्वारा कश्चित् प्राणसखः, समानराजः, विद्यादाता गुरुः वा स्वकार्यं साधयन् अस्ति इति भाति मम । यदि प्राणस्नेहितः समानराजः वा एतादृशस्य कारणीभूतः स्यात् तर्हि तत्र दोषः नास्ति । किन्तु गुरोः निमित्तं भवान् एतत् सर्वं कुर्वन् अस्ति चेत् मम तु भासते यत् एतद्विषये पुनश्चिन्तनं वरम् इति । यतः विद्याभ्यासस्य

# वेतालकथा



अनन्तरं गुरवे गुरुदक्षिणा दीयते एव । तदनन्तरम् अपि गुरोः धनयाचनं, तदर्थं शिष्यस्य परिश्रमकरणम् इत्यादिकम् उचितं न । अत्र उदाहरणार्थं कृपाकरनाम्नः गुरोः कथां श्रावयामि । श्रमस्य विस्मरणार्थं तां शृण्वन् गच्छतु'' इति ।

ततः वेतालेन कथा आरब्धा -

पूर्वं बदरिकावने किञ्चित् प्रख्यातं गुरुकुलम् आसीत् । तस्य सञ्चालकः आसीत् आचार्यः कृपाकरः । सः स्वसमीपम् आगतान् सर्वान् अपि शिष्यत्वेन स्वीकरोति स्म । तेषाम् अभिरुचेः अनुगुणं विद्यादानं करोति स्म च ।

कृपाकरस्य गुरुकुले अध्ययनस्य समाप्तेः अवधिः कोऽपि न आसीत् । शिष्याः यावत् इच्छन्ति तावत्पर्यन्तं विद्याम् अधीत्य तृप्त्या गच्छन्ति स्म । केचन एकवर्षं यावत् तिष्ठन्ति स्म । पुनः केचन बहुवर्षाणि यावत् अभ्यासं कुर्वन्ति स्म ।

''विद्याभ्यासस्य आरम्भः अस्ति, न तु अन्त्यम् । गुरुणा मया यावत् ज्ञातम् अस्ति तावत् पाठयामि । इदानीम् अपि अहम् अध्ययनं कुर्वन् एव अस्मि । विद्याभ्यासः एव मम जीवनस्य लक्ष्यम् । अतः एव अहम् एतत् गुरुकुलं चालयन् अस्मि । स्वस्य जीवनलक्ष्यानुसारं यः कोऽपि अत्र आगत्य यावत्कालम् इच्छति तावत्कालं यत् इच्छति तत् पठितुम् अर्हति । किं कियत्कालम् अध्येतव्यम् इति निर्णयः तत्तस्य एव'' इति कृपाकरः शिष्यान् तदा तदा वदति स्म ।

यावत् गुरुकुले स्थितिः भवति तावत् शिष्यैः शरीरश्रमयुक्तं कार्यं करणीयम् आसीत् । शिष्याणाम् एतादृश्यः सेवाः एव गुरुदक्षिणा इति वदति स्म कृपाकरः ।

एकदा कृपाकरस्य समीपं शिष्यौ उमेश-रमेशौ आगतवन्तौ । तौ तम् उद्दिश्य - ''गुरुवर्य ! आवां विशेषतया वैद्यशास्त्रस्य अध्ययनार्थम् अत्र आगतवन्तौ स्वः । यावत् शक्यते तावच्छीघ्रं विद्याभ्यासः समापनीयः इति आवयोः आशयः । तदर्थं भवतः सहकारः अपेक्षितः । आवां शारीरकसेवासु न योजयतु कृपया । आदिनं विद्याभ्यासे मग्नौ भवेव इति अस्ति आवयोः आशयः'' इति उक्तवन्तौ ।

कृपाकरः एतत् अङ्गीकृतवान् । परन्तु एतेन निर्णयेन तत्र विद्यमानेषु प्राचीनेषु शिष्येषु असूया उत्पन्ना । ते गुरोः समीपं

गत्वा - ''सर्वेषां शिष्याणां कृते एकः एव नियमः भवेत् । भवता एतादृशः भेदभावः न दर्शनीयः खलु ?'' इति पृष्टवन्तः ।

तदा कृपाकरः हसन् - ''उमेश–रमेशौ आ बाल्यात् शरीरश्रमं अनुभवन्तौ एव प्रवृद्धौ । इदानीं तौ पठनासक्तौ जातौ स्तः । शरीरश्रमम् अजानतां भवताम् एषः शरीरश्रमः विद्याभ्यासस्य अङ्गं जातम् अस्ति । उमेश-रमेशयोः तु एतस्य आवश्यकता नास्ति'' इति उक्तवान् ।

तदा शिष्याः - ''पूर्वं भवान् - 'शरीरश्रमः एव गुरुदक्षिणा' इति उक्तवान् आसीत् । इदानीम् एषः विद्याभ्यासस्य अङ्गम् इति वदति । भवतः वचनस्य अर्थः एव अस्माभिः न अवगतः । उमेश-रमेशाभ्यां भवान् कामपि गुरुदक्षिणां न स्वीकरिष्यति किम् ?'' इति पृष्टवन्तः ।

''प्रतिशिष्यात् अपि गुरुदक्षिणां प्राप्स्यामि एव । ये शारीरकश्रमं न वहन्ति तेभ्यः निरीक्षमाणा गुरुदक्षिणा सामान्या न भविष्यति । तां सामान्यजनाः दातुं न शक्नुवन्ति अपि । विद्याभ्यासकाले शारीरकश्रमः न कृतः यत् तदर्थम् अनन्तरकाले तैः पश्चात्तापः अनुभोक्तव्यः भवेत् अपि'' इति तान् शिष्यान् उक्तवान् कृपाकरः ।

गुरुः सर्वेषु विषयेषु अपि गभीरतया चिन्तयति इति विश्वस्यन्तः ते शिष्याः तृप्त्या प्रतिगतवन्तः । वर्षत्रयम् अतीतम् । एकदा उमेश-रमेशौ गुरोः समीपम् आगत्य - ''गुरुवर्य ! एतावत्पर्यन्तं यत् आवाभ्याम् अधीतं तत् जीवननिर्वहणार्थं पर्याप्तम्



अस्ति । अतः प्रतिगमनार्थम् अनुमतिं ददातु कृपया'' इति उक्तवन्तौ ।

''भवन्तौ मह्यं गुरुदक्षिणाम् अदत्त्वा एव इतः गच्छतः किम् ?'' इति पृष्टवान् कृपाकरः ।

''यत् भवान् इच्छति तत् वदतु गुरुवर्य । तत् दास्यावः'' इति उक्तवन्तौ शिष्यौ ।

''अन्यशिष्यवत् यदि भवन्तौ अपि शारीरकश्रमयुक्तां सेवाम् अकरिष्यतां तर्हि सा एव गुरुदक्षिणा इति अचिन्तयिष्यम् । परन्तु भवन्तौ तथा न कृतवन्तौ । मत्तः भवद्भ्यां वर्षत्रयम् अधीता विद्या सामान्या न । इदानीं भवन्तौ स्वग्रामं गत्वा स्वस्य इच्छानुसारं वैद्यवृत्तेः आरम्भं कुरुताम् । एकस्य वर्षस्य अन्ते अहम् एव भवतोः समीपम् आगमिष्यामि । तदा भवतोः



एकैकेन अपि लक्षं सुवर्णनाणकानि मह्यं दातव्यानि । सा एव मम गुरुदक्षिणा'' इति उक्तवान् कृपाकरः ।

''वर्षाभ्यन्तरे लक्षं सुवर्णनाणकानि दातव्यानि ! आवाभ्यां तत् शक्यते किम् ?'' इति पृष्टवन्तौ उमेश-रमेशौ ।

कृपाकरः क्षणकालं विचिन्त्य - ''एतस्य देशस्य राजा प्लवङ्गः कस्माच्चित् रोगात् पीडितः अस्ति । तस्य रोगस्य औषधम् एतावत्पर्यन्तं केनापि न अन्विष्टम् । एतस्मिन् आश्रमे तदर्थं मया अपि प्रयत्नः क्रियमाणः अस्ति । एतावत्पर्यन्तम् अहं सफलः न अभवम् । प्लवङ्गस्य रोगनिवारणं यः करिष्यति तस्मै लक्षं सुवर्णनाणकानि उपायनरूपेण दीयन्ते । तदर्थं भवन्तौ अपि प्रयत्नं कुरुताम् । निरन्तरप्रयत्नेन सर्वमपि सिद्ध्यति'' इति उक्तवान् ।

रमेशः स्वग्रामं कनकगिरिं गतवान् । तत्रत्यस्य प्रमुखवैद्यस्य केशवस्य समीपं गत्वा - ''महाराजस्य प्लवङ्गस्य रोग-निवारणार्थम् औषधम् अन्वेष्टुम् इच्छामि । तदर्थं भवतः सहकारः अपेक्षितः । उपायनरूपेण यत् धनं लभ्यते तत्र समभागं द्वौ अपि स्वीकुर्वः'' इति उक्तवान् ।

केशवः रमेशस्य पूर्वापरं सर्वं ज्ञात्वा - ''भवान् कृपाकरस्य शिष्यः किम् ? सः महापुरुषः अस्ति । सः विद्यादानार्थमेव जन्म प्राप्तवान् अस्ति । शरीरश्रमात् भीताः बहवः तस्य शिष्याः भवितुं सिद्धाः न भवन्ति । तस्य समीपे वैद्यशास्त्रम् अधीतवतां हस्तगुणः उत्कृष्टः एव भवति । अहं भवते पुत्रीं दास्यामि । अनन्तरम् आवां मिलित्वा एव वैद्यवृत्तिं करवाव । तदा धनस्य वृष्टिः एव भविष्यति'' इति उक्तवान् ।

तस्य वाक्यैः रमेशः सन्तुष्टः जातः । अनन्तरं सः प्लवङ्गस्य रोगस्य विषये पुनः पृष्टवान् ।

''सः कश्चित् विचित्रः रोगः । तदर्थम् औषधम् अन्वेष्टव्यम् इति मया बहुधा चिन्तितम् । परन्तु वैद्यविद्यायां नूतनस्य औषधस्य गुणं ज्ञातुं प्रथमं तस्य प्रयोगः कर्तव्यः खलु ? यदि अन्यः कश्चित् सामान्यः तेन रोगेण पीडितः स्यात् तर्हि प्रयोगं कर्तुम् अशक्ष्यम् । परन्तु इदानीं सः प्रयोगः तु राज्ञः विषये एव करणीयः भवति । तदर्थं धैर्यं कुतः ? यदि अपचारः भविष्यति तर्हि शिरश्छेदः एव भवेत् ।

अतः एव मया तत्र प्रयत्नः न कृतः । आवयोः मौनमेव वरम् इति मन्ये'' इति उक्तवान् केशवः ।

शुभे मुहूर्ते केशवस्य पुत्रीं रमेशः परिणीतवान् । श्वशुर-जामातरौ मिलित्वा वैद्यवृत्तिम् आरब्धवन्तौ । रमेशः कृपाकरस्य शिष्यत्वेन महतीं प्रसिद्धिं प्राप्तवान् । स्वस्य गृहे कृपाकरस्य महत् चित्रं लेखयित्वा स्थापितं तेन । आगतान् सर्वान् रोगिणः कृपाकरस्य श्रेष्ठतां वदन्तौ आस्तां कृपाकरः केशवः च ।




कृपाकरस्य शिष्यः इति प्रसिद्धिं प्राप्तवतः रमेशस्य वैद्यवृत्तिः फलकारिणी आसीत् इति कारणतः तस्य आयः दिने दिने वर्धमानः आसीत् । षण्मासाभ्यन्तरे एव सः विनायासं लक्षं सुवर्णनाणकानि सम्पादितवान् ।

अन्यत्र उमेशः स्वग्रामं वरुणगिरिं प्राप्तवान् । तस्मिन् समये एव पार्श्वगृहस्थः सुन्दरः पिशाचेन पीडितः आसीत् । अतः प्रसिद्धं भैरवनामकं मन्त्रवादिनम् आनीतवन्तः आसन् तद्गृहसदस्याः । एतं विषयं ज्ञातवान् उमेशः सुन्दरस्य माता-पित्रोः समीपं गत्वा - ''भवतोः पुत्रः केनापि पिशाचिना निश्चयेन पीडितः नास्ति । तस्य मस्तिष्के कस्यचित् रसस्य उत्पत्तिः आधिक्येन जाता स्यात् । अतः सः एवं रूक्षतया व्यवहरन् अस्ति । अहम् उचितम् औषधं दत्त्वा सप्ताहाभ्यन्तरे एव तं स्वस्थं करिष्यामि'' इति उक्तवान् ।

परन्तु सुन्दरस्य मातापितरौ उमेशस्य वचने विश्वासम् अकुर्वन्तौ एतां वार्तां भैरवम् उक्त्वा तस्य अभिप्रायं पृष्टवन्तौ । भैरवः एतत् श्रुत्वा भयङ्करस्वरेण गर्जनं कुर्वन् - ''कालभैरवः इदानीं कुपितः अस्ति । एवम् उक्तवन्तं तं मूर्खम् अत्र आनयन्तु'' इति उक्तवान् ।

उमेशः भैरवस्य समीपम् आगतवान् । द्वौ अपि किञ्चित्समयं यावत् चर्चां कृतवन्तौ । द्वयोः मध्ये वादविवादः संवृत्तः । 'उमेशः बुद्धिमान् अस्ति, तस्य वचनं सत्यमस्ति' इति ज्ञातवान् भैरवः तम् उद्दिश्य मृदुस्वरेण - ''उमेश ! भवता इतोऽपि ज्ञातव्यं बहु अस्ति । मम वचनानि अवधानपूर्वकं शृणोतु तावत् । साधारणवैद्यवृत्तितः यावत् धनं प्राप्येत ततोऽपि अधिकं प्राप्यते मान्त्रिक-वैद्यवृत्तितः । परन्तु मान्त्रिकवैद्यस्य औषधेन रोगपरिहारः पूर्णतया न भवति । मम

मान्त्रिकज्ञानं, भवतः वैद्यज्ञानं च यदा मेलयामः तदा तत्समम् अन्यत् न भविष्यति । अहं मम पुत्र्या सह भवतः विवाहं करिष्यामि । आवां मिलित्वा वैद्यवृत्तिं करवाव'' इति उक्तवान् ।

एतम् उपायम् उमेशः इष्टवान् । सः भैरवस्य प्रसिद्धिं दृष्ट्वा सन्तोषेण तस्य शिष्यत्वम् अङ्गीकृतवान् । एतयोः द्वयोः प्रयत्नेन सप्ताहाभ्यन्तरे एव सुन्दरः स्वस्थः जातः । एतेन सर्वेषां मनस्सु एतयोः विषये विश्वासः उत्पन्नः ।

कस्यापि रोगः इति वार्ता ज्ञाता चेत् एतौ द्वौ तत्र गत्वा – ''एषा भूतचेष्टा'' इति वदतः स्म । पूजार्थं यथेष्टं धनं पृच्छतः स्म । प्रसादरूपेण उमेशेन दीयमानम् औषधम् अपूर्वं परिणामं जनयति स्म । ततः जनाः शीघ्रमेव रोगमुक्ताः भवन्ति स्म । एतस्मात् कारणतः एतयोः विषये जनानां विश्वासः श्रद्धा च अधिका जाता ।

एवं वर्षाभ्यन्तरे एव द्विलक्षसुवर्ण-नाणकानि सम्पादितवान् उमेशः । परन्तु सः कुत्रापि आत्मानं कृपाकरस्य शिष्यं न उक्तवान् आसीत् । यदि कृपाकरस्य नाम उच्येत तर्हि तदीयं वास्तविकस्वरूपम् अन्यैः ज्ञातं भवेत् खलु । अतः सः कृपाकर-शिष्यत्वं गोपयन् एव महतीं प्रसिद्धिं प्राप्तवान् आसीत् । अपि च उमेशस्य मनसि कृपाकराय गुरुदक्षिणादानविषयः अपि न आसीत् ।

एवं यद्यपि उमेशस्य सम्पादनम् उत्तममेव आसीत्, तथापि वरुणगिरौ तस्य विषये उत्तमाभिप्रायः तु न आसीत् । 'सः मान्त्रिकः सन् भूतप्रेतादीन् वशीकृत्य सामान्यजनेभ्यः बहु धनं स्वीकुर्वन् सर्वदा पीडयति' इति परस्परं सम्भाषणं कुर्वन्ति स्म जनाः । परन्तु 'तस्य विषये यदि



अपवचनानि वदामः तर्हि अनर्थः भवेत्' इति चिन्तयन्तः ते भीताः आसन् । धनिकाः तस्य व्यवहारं सोढुं शक्ताः आसन् । किन्तु मौनेन तिष्ठन्ति स्म । दरिद्राः तत् सोढुम् अशक्ताः सन्तः अपि अनन्यगतिकतया मौनम् आश्रयन्ति स्म । उमेशस्य आयः तु दिने दिने वर्धमानः एव आसीत् ।



एकं वर्षम् अतीतम् । कृपाकरः स्वस्य आगमनस्य वार्ता शिष्याभ्यां प्रेषितवान् । सः प्रथमं वरुणगिरिं गत्वा उमेशस्य विषये विचारितवान् । तस्य मन्त्रवैद्यत्वम्, अतीव धनाशां च सः ज्ञातवान् । यदा सः तस्य गृहं गतवान् तदा उमेशः गृहे एव तिष्ठन् अपि स्वस्य अनुपस्थितिं वाचितवान् । तस्य श्वशुरः भैरवः - ''भवतः विषये जामाता मां किमपि न उक्तवान् एव'' इति उक्तवान् ।

''अहम् उमेशस्य गुरुः अस्मि । मया उमेशतः यावत् प्रप्तव्यम् आसीत् ततोऽपि अधिका गुरुदक्षिणा प्राप्ता अस्ति उमेशात् । अहम् अत्यन्तं सन्तुष्टः अस्मि । एतं विषयं तं सूचयतु'' इति उक्त्वा कृपाकरः ततः प्रस्थाय कनकगिरिं गतवान् ।

रमेशः यदा लक्षं सुवर्णनाणकानि गुरुदक्षिणारूपेण दातुम् उद्युक्तः तदा कृपाकरः अनङ्गीकारपूर्वकं शिरः चालयन् - ''वैद्यकीयवृत्त्या न्याय्येन मार्गेण एतस्मिन् अल्पे काले एतावतः धनस्य सम्पादनं सर्वथा अशक्यम् । असहायकरोगिभ्यः अनुरोध-पूर्वकम् अधिकधनस्वीकरणात् केवलं सिद्ध्यति एतत् सर्वम् । अतः एतत् धनम् अहं न स्पृशामि । वैद्यस्य सेवाधर्मः कश्चित् अस्ति । तं भवान् इतोऽपि न ज्ञातवान् । यदा कदापि भवतु, गच्छता कालेन भवान् तादृशीं गौरवप्रदां गुरुदक्षिणां दातुं योग्यतां सम्पादयतु इति एव मम आशयः । भवन्तम् अन्यम् एकं विषयं वक्तुम् इच्छामि । भवतोः शिष्ययोः जीवनमार्गं पूर्वमेव ज्ञातवान् अहं राज्ञः प्लवङ्गस्य रोगं षण्मासेभ्यः पूर्वमेव परिहृतवान् । लक्षं सुवर्णनाणकानि सम्पादयितुं यः मार्गः आसीत् सः अपि इदानीं नास्ति'' इति उक्त्वा ततः गुरुकुलं गतवान् ।

वेतालः एवं कथां समाप्य - ''राजन् ! लोके असूयामात्सर्यादिदुर्गुणाधीनानां व्यवहारः नितरां विचित्रः भवति । गुरुकुले स्थित्वा वर्षत्रयं यावत् वैद्यशास्त्रस्य अध्ययनं कृत्वा अनन्तरं मान्त्रिकवैद्येन सह

यः कार्यं कुर्वन् आसीत्, जनानां पुरतः 'कृपाकरस्य शिष्यः अहम्' इति वक्तुम् अपि यः न इच्छति स्म, तस्मात् आशयस्य अपेक्षया अधिका गुरुदक्षिणा प्राप्ता इति उक्तवान् कृपाकरः । परन्तु सः एव कृपाकरः, यः तस्य भावचित्रं संस्थाप्य दशजनानां पुरतः 'कृपाकरस्य शिष्यः अहम्' इति साभिमानं वदति स्म, तस्मात् लक्षसुवर्णनाणकात्मिकायाः गुरुदक्षिणायाः स्वीकरणं निराकुर्वन् - 'असहायकान् रोगिणः पीडयन् अस्ति भवान्' इति वदन् दोषारोपणम् अपि कृतवान् । उमेशस्य विषये तृप्तिः, रमेशस्य विषये असन्तृप्तिः च प्रकाशिता कृपाकरेण । कृपाकरस्य एतादृशस्य व्यवहारस्य औचित्यम् अस्ति किम् ? एतस्य सन्देहस्य परिहारं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति'' इति उक्तवान् ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''कृपाकरः किञ्चित् अपि धनार्थी न । सः स्वशिष्येषु सेवाधर्मं द्रष्टुम् इष्टवान् । परन्तु रमेशः राज्ञः प्लवङ्गस्य रोगस्य औषधम् अन्वेष्टव्यम् इति एतं विषयम् एव विस्मृत्य रोगिभ्यः अधिकाधिकं धनं सङ्गृह्णन् आसीत् । अतः एव एकवर्षाभ्यन्तरे लक्षावधिकानि सुवर्ण-नाणकानि सम्पादयितुं शक्तवान् आसीत् सः । वैद्यः सम्मान-सत्कारादीनां प्राप्तेः द्वारा धनसङ्ग्रहणं कुर्यात्, न तु रोगिभ्यः धनसङ्ग्रहणद्वारा । वैद्यवृत्तेः अगौरवकरं भवति अन्याय्येन धनसङ्ग्रहणं नाम । अतः एव कृपाकरः रमेशम् उद्दिश्य - 'गौरवप्रदगुरुदक्षिणादानस्य योग्यतां प्राप्नोतु' इति आशीर्वादं कृतवान् । उमेशः तु अत्यन्तं दुष्टः आसीत् । सः अत्यन्तं पवित्रां वैद्यवृत्तिं मान्त्रिकवैद्यस्य सकाशे न्यासीकृतवान् आसीत् । 'तादृशः सः आत्मानं कृपाकरस्य शिष्यं न वदति यत् तत् एव उत्तमगुरुदक्षिणा' इति भावितवान् कृपाकरः । अतः एव सः भैरवं तथा उक्तवान् । यदा एतत् सर्वं परिशीलयामः तदा ज्ञायते यत् कृपाकरे असूया-मात्सर्ययोः लेशः अपि नास्ति इति'' इति ।

एवं वदता राज्ञा मौनभङ्गः कृतः आसीत् इत्यतः वेतालः ततः अदृश्यः भूत्वा पुनः वृक्षारोहणं कृतवान् ।






# कल्कत्तानगरम्

*रचना* - मीरानायर् * *चित्राणि* - गौतमसेनः

पश्चिमबङ्गालराज्यस्य राजधानी कल्कत्ता अस्माकं देशस्य द्वितीयं महानगरम् अस्ति । अस्य शतकस्य आरम्भकालं यावत् कल्कत्तानगरम् एव भारतस्य राजधानी आसीत् ।

ब्रिटिष्जनैः ऐदम्प्राथम्येन अत्र निर्मितस्य दुर्गस्य आवरणे एव अधुना सार्वजनिकपत्रालयः(General Post Office) अस्ति । बङ्गालस्य राजा सिराज् - उद् - दौलः क्रि.श.१७५६ तमे वर्षे एतत् दुर्गं स्वायत्तीकृतवान् । 'ब्लाक् - होल्'नामिका घटना तदा एव प्रवृत्ता । तस्मिन् अवसरे ६ + ४ मीटर् विस्तीर्णे लघुप्रकोष्टे १२३ ब्रिटिष्जनाः बद्धाः । ते अन्ते श्वासोच्छ्वासं कर्तुम् अशक्ताः सन्तः तत्रैव मृतवन्तः इति श्रूयते । पत्रालयस्य ईशान्यदिशि विद्यमाना कृष्णशिला तस्याः घटनायाः साक्षिरूपेण स्थिता इव अस्ति ।

पूर्वं यादृशं दुर्गम् आसीत् तस्मात् अपि महत् अन्यत् दुर्गं ब्रिटिष्जनाः गोविन्दपुरे निर्माय 'पोर्ट् विलियम्' इति तस्य नामकरणं कृतवन्तः । एतत् दुर्गं तु केनापि न आक्रान्तम् । अतः 'अनाक्रान्तं महत् दुर्गम्' इति ख्यातम् अस्ति इदं 'पोर्ट् विलियम्' ।

अधुना दुर्गं परितः विद्यमानं वनं सर्वं निवार्य ४ x $^{1}/_{2}$ कि.मी.विशालं सुन्दरम् उद्यानं निर्मितम् अस्ति तत्र । इदं च उद्यानं नगप्रदेशेषु विद्यमानेषु उद्यानेषु प्रथमं स्थानं प्राप्तवत् अस्ति ।

क्रिकेट्क्रीडायाः प्रसिद्धं क्रीडाङ्गणम् 'ईडन्गार्डन्स्' अपि अस्मिन् उद्याने एव अस्ति । अस्माकं देशस्य प्रथमः क्रिकेट्सङ्घः (criket club) क्रि.श. १७९२ तमे वर्षे अत्रैव आरब्धः ।



रायल्कल्कत्तागोल्फ्सङ्घः, प्रादेशिकस्पर्धासु बहुवारं जयं प्राप्तवान् मोहन्बगान् फुट्बाल्सङ्घः, अत्यन्तं विशालया दीर्घया च धावनभूम्या (race-course) युक्तः सङ्घः इति देशे एव प्रसिद्धः रायल्कल्कत्ताटर्फ्सङ्घः इत्यादयः अपि अस्मिन् उद्याने एव सन्ति ।

ईडन्-उद्यानम्



# कल्कत्तानगरस्य

चौरङ्गी स्ट्रीट् इति यस्य नाम पूर्वम् आसीत्, सः एषः मार्गः अधुना जवाहरलाल्नेहरूमार्गः इति निर्दिश्यते। देशे ऐदम्प्राथम्येन ग्यास्लैट्-प्रकाशं, विद्युद्दीपस्य प्रकाशं च दृष्टवती नगरी कल्कत्ता एव।

चौरङ्गीलेन्

पञ्चदशवर्षात्मके कालखण्डे निर्मितस्य विक्टोरियास्मारकभवनस्य निर्माणकार्यं क्रि.श.१९२१ तमे वर्षे पूर्णम् अभवत्। 'राज्ताज्महल्' इति नाम्ना प्रसिद्धम् इदं महाभवनं क्रि.श.१९०१ तमे वर्षे दिवङ्गतायाः विक्टोरियाराज्ञ्याः स्मरणार्थं निर्मितम् अस्ति।

एतस्य भवनस्य निर्माणार्थं राजस्थानतः आनीतां विशिष्टाम् अमृतशिलाम् उपयुक्तवन्तः सन्ति।

षहीद्मिनार्



विक्टोरिया मेमोरि

अस्माकं देशस्य प्रथमः धूमशकटसुरङ्गमार्गः कल्कत्तानगरे विद्यमानात् बोलिगञ्जतः डं डं पर्यन्तं (१६ कि.मी दैर्घ्ययुक्तः) निर्मितः अस्ति।

मेट्रोरेल्सुरङ्गमार्गः



कल्कत्तानगरस्य नगरदेवता काली। कालिघाट्मध्ये कालिकामन्दिरम् अस्ति। ततः अनतिदूरे मदर्थेरेसावर्यया संस्थापितः 'निर्मलहृदय'नामकः अनाथाश्रमः अस्ति। अस्मिन् अनाथाश्रमे, नगरस्य चिकित्सालये च रोगिणां सेवां कुर्वणाः नीलाञ्चलयुक्तां श्वेतां शाटिकां धृतवत्यः मिषनरि-



# दृश्यानि

अनुवद्याः द्रष्टुं तत्र तत्र उपलभ्यन्ते ।

४ मीटर्-उन्नतं षहीद्मिनार्स्मारकस्य नाम आदौ अक्बर्लोनिस्मारकम् इति आसीत् । ईष्ट्-इण्डिया-संस्थायाः नायकेन सता, नेपालस्य आक्रमणं कृतवतः, सर् डेविड् अक्बर् लोनेः स्मरणार्थम् इदं स्मारकम् आदौ निर्मितम् । पश्चात् क्रि.श. १८२८ तमे वर्षे इदं महास्मारकरूपेण परिवर्तितम् । एतस्य ऊर्ध्वभागं प्रति गमनाय अधुना २२३ सोपानानि सन्ति ।



नबोदा यवनमन्दिरम्

सिकन्द्राबाद्नगरे स्थितम् अक्बर्भवनम् अनुकृत्य कल्कत्तानगरस्य नबोदामास्क् १९२६ तमे वर्षे निर्मितम् अस्ति । कल्कत्तानगरे विद्यमानेषु यवनमन्दिरेषु इदम् एव अत्यन्तं विशालम् अस्ति । अस्मिन् १०,००० जनाः युगपत् उपविश्य प्रार्थनां कर्तुं शक्नुवन्ति । कस्मिंश्चित् कालखण्डे ईष्ट्-इण्डिया-संस्थायाः





ीरियल्



मदर् थेरेसा स्मारकम्



लिपिकारभवनम्

लिपिकाराणां कर्मभूमिः आसीत् 'रैटर्स् भवनम्'।

क्रि.श. १८८० तमे वर्षे एतत् भवनं पूर्णतया पुनर्निर्मितम्। अधुना इदं सर्वकारस्य प्रधानः सचिवालयः अस्ति।

रवीन्द्रनाथठाकुरवर्यः कलकत्तानगरस्थे जोरोसाङ्कोगृहे जन्म प्राप्तवान्। तस्मिन् एव गृहे तस्य मरणम् अपि जातम्। अभिमानिभिः 'पूज्यः गुरुदेवः' इति निर्दिष्टः विश्वकविः रवीन्द्रनाथठाकुरवर्यः गीताञ्जलिनामकं विश्ववन्द्यं काव्यं रचितवान्। तदर्थं तस्मै १९१३ तमे क्रिस्ताब्दे नोबेल्पारितोषिकं दत्तम् आसीत्।



**जोरोसाङ्कोगृहम्, यत्र च रवीन्द्रनाथस्य जन्म अभवत्**

स्वराज्यस्य साहित्यसम्पदं सम्प्रदायं च अधिकृत्य विशेषाभिमानं वहन्ति कलकत्ताजनाः।

अलिपुरराष्ट्रियग्रन्थालयः अस्मद्देशस्थेषु ग्रन्थालयेषु विशालतमः अस्ति। एतस्य दैर्घ्यं ५१ कि.मी.। अत्र कपाटिकासु २० लक्षं ग्रन्थाः, ताडग्रन्थाः च सन्ति। आशुतोषमुखर्जी एतेषु बहून् ग्रन्थान् सङ्गृहीतवान्। सर्वेषां ग्रन्थानाम् आवली अपि कृता अस्ति अत्र।

कलकत्तानगरस्थम् अपरं विशालभवनं 'मार्बल् प्यालेस्'नामकम्। कलाभिमानी धनिकः वणिक् राजा राजेन्द्रमल्लिकः १८१५ तमे क्रिस्ताब्दे अमृतशिलामयम् एतत् भवनं निर्मापितवान्। विश्वस्य विविधकोणेभ्यः सङ्गृहीतानि शिल्पानि, मूर्तयः, चित्रपटाः इत्यादिभिः कलात्मकवस्तुभिः युक्ताः अत्रत्याः प्रकोष्ठाः सर्वेऽपि अतिविशिष्टाः एव।

एतत् भवनम् इदानीम् अपि मल्लिकवंशीयानाम् अधीनम् एव अस्ति। कुलाचारानुगुणं प्रतिदिनम् अपि अत्र मध्याह्नकाले अन्नदानं प्रचलति।

**मार्बल् प्यालेस्**





# चतुरः वृद्धः

ग्रीसदेशस्य कस्मिंश्चित् ग्रामे सपत्नीकः कश्चन वृद्धः निवसति स्म । कदाचित् सः पत्नीम् उक्तवान् - "अये, किञ्चित् धनम् आवश्यकम् अस्ति । अतः भवती गृहे स्थितां धेनुं नीत्वा विक्रीय आगच्छतु । अहम् एव गच्छेयम् । किन्तु किं करवाणि, मम पादौ व्रणितौ स्तः" इति ।

वृद्धा धेन्वा सह साप्ताहिकवाणिज्य-स्थलं प्रति प्रस्थितवती । त्रयः वञ्चकाः दूरात् एव तां दृष्टवन्तः । 'एषा वृद्धा विक्रयणार्थं धेनुं नयन्ती अस्ति । वञ्चनाम् आश्रित्य अल्पमूल्येन सा धेनुः क्रेतव्या' इति चिन्तयन्तः ते तदर्थम् एकम् उपायम् अपि चिन्तितवन्तः ।

कश्चन वञ्चकः वृद्धायाः समीपं गत्वा - "एषा अजा किं विक्रयणार्थं नीयते ? किं मूल्यम् एतस्याः ?" इति पृष्टवान् ।

"किं भवान् क्षीणदृष्टिः ? धेनुः अजा इति उच्यते खलु भवता ?" इति कोपेन उक्तवती वृद्धा ।

तदा वञ्चकः - "अम्ब ! भवत्याः भ्रान्तिः । एषा तु अजा एव । त्रिंशत् रूप्यकाणि दास्यामि । एतत् मह्यं ददातु भवती" इति उक्तवान् ।

वृद्धा हस्तस्थेन दण्डेन तं प्रहृत्य अग्रे गतवती । किञ्चिद्दूरं यदा गतं तदा अपरः वञ्चकः तस्याः समीपम् आगत्य - "कुत्र गमनं भवत्याः ?" इति पृष्टवान् ।

"साप्ताहिकवाणिज्ये एतां विक्रेतुं नगरं गच्छन्ती अस्मि" इति उक्तवती वृद्धा ।

"पञ्चविंशतिरूप्यकैः अहम् एतां क्रीणामि । मह्यं ददातु एताम्" इति उक्तवान् सः वञ्चकः ।

"किं बुद्धिः नष्टा भवतः ? उत्तमा एषा धेनुः अजामूल्येन विक्रेतव्या वा मया ?" इति पृष्टवती वृद्धा ।

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



तदा सः वञ्चकः आश्चर्यं प्रकटयन् - "वयसः कारणतः भवती क्षीणदृष्टिः अस्ति । अतः एव अजां धेनुं मन्यते भवती" इति उक्तवान् ।

"अस्तु नाम मम क्षीणदृष्टिता" इति उक्त्वा अग्रे गतवती वृद्धा । गमनसमये तस्याः मनसि विचारः आगतः - 'मया धेनुः नीयमाना अस्ति । किन्तु सर्वे ताम् अजां वदन्तः सन्ति खलु?' इति ।

एवं चिन्तयन्ती सा यदा गच्छन्ती आसीत् तदा तृतीयः वञ्चकः तस्याः अभिमुखम् आगतः । "अम्ब ! एषा अजा किं विक्रयणार्थं नीयते ? अहम् एतां विंशतिरूप्यकैः क्रेतुम् इच्छामि" इति उक्तवान् ।

"भवान् अपि वदति खलु - एषा अजा एव इति ! का एषा माया ? मया तु धेनुं गृहीत्वा प्रस्थितम्" इति उक्तवती वृद्धा ।

"भवती भ्रान्ता ! एताम् अजां विंशतिरूप्यकैः विक्रीय सुखेन गृहं गच्छतु भवती" इति उक्तवान् सः वञ्चकः ।

"इतः पूर्वम् एकः त्रिंशद्रूप्यकैः, अपरः पञ्चविंशतिरूप्यकैः च एतां क्रेतुं सिद्धः आसीत् । मया निराकृतिः प्रदर्शिता । एवं स्थिते भवते विंशतिरूप्यकैः कथं वा विक्रेतुं शक्येत ? त्रिंशद्रूप्यकाणि वा ददातु" इति उक्तवती वृद्धा ।

"वस्तुतः एतस्याः मूल्यं त्रिंशद्-रूप्यकात्मकं न । तथापि वृद्धायां भवत्यां व्यथां जनयितुम् अनिच्छन् अहं तावत् धनं ददामि" इति उक्त्वा त्रिंशद्रूप्यकाणि दत्त्वा धेनुं स्वीकृत्य ततः निर्गतवान् ।

वृद्धा धेनुम् अजामूल्येन विक्रीय गृहं गत्वा पतिं प्रवृत्तं समग्रं निवेदितवती । सर्वं श्रुत्वा वृद्धः - 'एतत् सर्वं पार्श्वग्रामवासिनः धूर्तत्रयस्य एव कार्यम्' इति विचिन्त्य पत्नीम् उद्दिश्य - "यत् प्रवृत्तं तद्विषये अलं चिन्तया । अग्रे यत् करणीयं तद् अहं करिष्यामि" इति उक्तवान् ।

ततः वृद्धः बहिः गत्वा समानाकारकौ उभौ शशौ गृहीत्वा आनीतवान् । एकं शशं गृहे पेटिकायां संस्थाप्य अपरेण युक्तां पेटिकां नयन् पत्नीम् उद्दिश्य - "अये ! अद्य अस्मद्गृहं प्रति अतिथयः आगमिष्यन्ति । अतः पोलिकां, पायसं, चित्रान्नं च सज्जीकरोतु । गृहम् आगतः अहं - 'कः पाकः ?' इति यदा पृच्छामि तदा - 'शशेन यथा सूचितं तथैव सर्वं सज्जीकृतम्' इति

वदतु'' इति उक्त्वा ततः निर्गतवान् ।

यदा वृद्धः पार्श्वग्रामसमीपं गतवान् तदा सुरापणस्य पुरतः तेन त्रयः ते धूर्ताः दृष्टाः । वृद्धं दृष्ट्वा ते उपहासमिश्रितेन स्वरेण - ''किं रे वृद्ध ! भवतः पत्नी अजा-धेन्वोः भेदम् अपि न जानाति खलु !'' इति उक्तवन्तः ।

''आं, सा मन्दमतिः । व्यवहारे सर्वथा अनिपुणा । किन्तु पाके तु नितरां चतुरा'' इति उक्तवान् वृद्धः ।

''तत् वा जानाति खलु सा !'' इति उक्तवान् अपरः धूर्तः ।

वृद्धः क्षणकालं चिन्ताम् अभिनीय - 'अद्य कः पाकः कारणीयः ? पायसं, पोलिकां, चित्रान्नं च कारयामि' इति स्वगतम् उच्चस्वरेण उक्त्वा पेटिकास्थं शशं हस्तेन गृहीत्वा - ''वत्स ! गृहं गत्वा अम्बां वदतु यत् अद्य पायसं, पोलिका, चित्रान्नं च सज्जीकरणीयम् इति'' इति उक्त्वा तं त्यक्तवान् । शशः उत्प्लुत्य धावन् ततः अदृश्यः जातः ।

''विचित्रं खलु एतत् ! एषः शशः वस्तुतः अपि गृहं गत्वा भवता उक्तं सर्वं भवतः पत्नीं वदति किम् ?'' इति पृष्टवन्तः ते धूर्ताः ।

''अथ किम् ? आ बाल्यात् पोषितः अस्ति एषः । यदि मम वचने भवताम् अविश्वासः तर्हि भवन्तः मया सह मद्गृहम् आगत्य परीक्षां कुर्वन्तु । भवतां भोजनम् अपि मम गृहे भवतु'' इति उक्तवान् वृद्धः ।

त्रयः अपि धूर्ताः तम् अनुसृतवन्तः । गृहं प्राप्तवान् वृद्धः पत्नीं पृष्टवान् - ''अद्य कः पाकः ?'' इति ।

''शशेन यत् सूचितं तत्सर्वं कृतवती अस्मि'' इति उक्तवती वृद्धा । चत्वारः अपि भोजनार्थम् उपविष्टवन्तः । भोजने पायसं,



पोलिका, चित्रान्नं च आसीत् । एतत् दृष्ट्वा ते धूर्ताः आश्चर्येण परस्परं पश्यन्तः समालोचनं कृतवन्तः । ततः – ''एतं शशम् अस्मभ्यं ददातु योग्यमूल्येन'' इति ते उक्तवन्तः ।

''एतस्य विक्रयणम् ! सर्वथा न शक्यते तत्'' इति उक्तवान् वृद्धः । 'अधिकमूल्यं दद्मः' इति उक्तवन्तः धूर्ताः । तथापि शशस्य विक्रयणं निराकृतवान् वृद्धः । अन्ते धूर्ताः उक्तवन्तः – ''दशसहस्रं रूप्यकाणि दद्मः'' इति ।

''ते तावता अनुरोधेन वदन्तः सन्ति । तथापि भवान् किमर्थम् एतस्य विक्रयणं न अङ्गीकरोति ? धनस्य आवश्यकता तु अस्ति एव अस्माकम्'' इति उक्तवती वृद्धा ।

''धेनुः इव शशः अपि यदि रूप-परिवर्तनं प्राप्नुयात् तर्हि का गतिः स्यात् ?'' इति उक्तवान् वृद्धः ।

''तथा न भविष्यति कदापि'' इति उक्तवान् एकः धूर्तः ।

ततः वृद्धः दशसहस्रं रूप्यकाणि स्वीकृत्य शशं विक्रीतवान् । धूर्ताः शशपेटिकां गृहीत्वा ततः निर्गतवन्तः ।

ग्रामं गच्छन्तः ते – 'अद्य अस्माकं गृहेषु कीदृशः पाकः भवेत् इति एतद्द्वारा इदानीम् एव वार्तां प्रेषयाम' इति निश्चित्य स्वस्य अपेक्षाम् उक्त्वा शशं त्यक्तवन्तः । शशः क्षणाभ्यन्तरे अदृश्यतां गतः ।

त्रयः अपि गृहं गताः । शशद्वारा प्रेषिता वार्ता गृहं प्रति न आगता इति यदा ज्ञातं तदा ते निर्णीतवन्तः यत् वृद्धः अस्मान् वञ्चितवान् इति । अतः ते वृद्धस्य गृहं गत्वा कठोरशब्दैः तं निन्दितवन्तः ।

सर्वं शान्ततया श्रुत्वा वृद्धः पृष्टवान् – ''प्रेषणात् पूर्वं भवन्तः शशस्य आमर्शनं कृतवन्तः वा ?'' इति ।

''न'' इति उक्तवन्तः धूर्ताः ।

''अतः एव शशः वायुरूपेण परिवर्तितः जातः'' इति उक्तवान् वृद्धः ।

''शशः कथं वा वायुरूपेण परिवर्तेत ?'' इति पृष्टवन्तः ते धूर्ताः ।

''महाकारिका धेनुः एव अजारूपेण यदि परिवर्तेत तर्हि शशः वायुरूपेण कथं वा न परिवर्तेत ?'' इति पृष्टवान् वृद्धः ।

'प्रतीकारसाधनार्थम् एव वृद्धः एतत्सर्वं कृतवान् अस्ति' इति जानन्तः ते धूर्ताः मौनेन ततः निर्गतवन्तः ।



# वीरपाण्ड्यः कट्टबोम्मन्

*रचना* - मीरा उग्रा ★ *चित्राणि* - गौतमसेनः

१८ शतके: तमिलुनाडुमध्ये बहवः संस्थानाधिपतयः आसन् । आकटिनवाबाय ते धनसङ्ग्रहणं कृत्वा ददति स्म । दुर्गे वसन्तः शासनं परिपालयन्तः ते पृथक् सैन्यस्य रक्षणम् अपि कुर्वन्ति स्म । क्रि.श.१७९२ तमे वर्षे आर्काटनवाबः करसङ्ग्रहणाधिकारं ईस्ट्- इण्डिया-संस्थायै दत्तवान् । तस्मिन् समये एतस्मिन् प्रदेशे एतादृशानि ७२ संस्थानानि आसन् ।













तिरुनेल्वेल्प्रदेशं प्रति जाक्सन् जनपदाधिकारिरूपेण आगतः । सः द्रष्टव्यः इति कट्टबोम्मन् आदेशं प्राप्तवान् ।
जाक्सन्प्रभुः प्रवासे अस्ति । सः कुट्राल्मध्ये द्रष्टुं शक्यः ।
कट्टबोम्मनेन २३ दिनानि यावत् एकस्मात् स्थलात् अन्यत्र अटनीयम् आपतितम् ।


अन्ते सः जाक्सनेन रामनाथपुरे मिलितवान् ।
अये ! भवान् ! भवतः उत्तरं किम् ?
संस्थानाधिपतये यादृशाः गौरवादरादयः दर्शनीयाः तादृशाः कट्टबोम्मनाय न दर्शिताः । उपवेष्टुम् अपि न सूचितम् ।


मया यत् वक्तव्यम् अस्ति तत् खड्गेन एव उच्यते । तदपि मम प्रदेशे एव ।


कट्टबोम्मनः कोपेन ततः प्रस्थितः ।
तं गृह्णन्तु ।


तमिलुव्याघ्रं चत्वारः शृगालाः बन्धुं शक्नुवन्ति किम् ?
कट्टबोम्मन् तस्य सहचराः च धैर्येण सङ्ग्रामं कृत्वा बहिः आगत्य स्वदुर्गं प्राप्तवन्तः ।


क्रि. श. १७९९ तमे वर्षे अक्टोबर्मासे ५ दिनाङ्के मेजर् ब्यानर्मन् सैन्येन सह आगत्य दुर्गम् आवृतवान् ।
मृत्तिकाभित्तयः ! एतत् दुर्गम् इति कथ्यते किम् ?


अनन्तरक्षणे .....
अम्ब ! अम्ब !
तेषां कुन्ताः दीर्घाः आसन् । कुन्तप्रयोगे सिद्धहस्ताः आसन् ते ।
कः सः युवकः ?
कट्टबोम्मनस्य अनुजः । तस्य नाम ऊमैदोरे ।


दुर्गस्य अन्तः ...
तैः दुर्गम् आक्रान्तम् । जयः प्राप्तः अस्माभिः ।
ते पुनः आगच्छेयुः । जागरूकतया भवितव्यम् ।


ब्रिटीष्सैन्यं पुनः आगत्य दुर्गास्य आक्रमणं कृतवत् । युद्धं प्रवृत्तम् । ब्रिटिष्सैन्यं दुर्गस्य अन्तः आगतः ।
वीरपाण्ड्यः कुत्र ?
वयं व्याघ्रगुहां प्रविष्टवन्तः स्मः । परन्तु व्याघ्रः तु पलायितः ।
कट्टबोम्मन् अदृश्यः जातः । परन्तु ....

अन्ये संस्थानाधीशाः तस्य साहाय्यं न कृतवन्तः । ते विदेशीयान् शरणं गतवन्तः ।




यदा कट्टबोम्मन् अरण्ये वसन् अज्ञातवासं कुर्वन् आसीत् तदा पुदुकोटेराजः आक्रमणं कृतवान् ।




ईस्ट्-इण्डियासंस्था एतस्मिन् विषये विचारणाम् अकरोत् । विदेशीयानां शासनम् अनङ्गीकृतवतः वीरपाण्ड्य-कट्टबोम्मनस्य मरणदण्डनं विहितवान् ब्यानर्मन् । 'संस्थानाधीशानां पुरतः एव एतस्मै मरणदण्डनं दातव्यम्' इति सः निश्चितवान् । कट्टबोम्मनस्य अन्तिक्षणानां विषये ब्यानर्मन् एवं लिखितवान् अस्ति - ''पार्श्वस्थान् धिक्कारदृष्ट्या पश्यन् सः धैर्येण अग्रे गतः ....''





कट्टबोम्मन् धैर्येण तिन्त्रिणीवृक्षस्य समीपं गत्वा स्वयं मरणरज्जुं कण्ठे स्थापितवान् ।




# महाभारतम्

अर्जुनः किञ्चित् अग्रे गत्वा कौरव-सेनायाः उपरि बाणवर्षणं कृत्वा उच्चैः शङ्खोद्घोषं कृतवान् । शङ्खध्वनिं श्रुत्वा गावः मुखम् उन्नीय परिवृत्य धावनम् आरब्धवत्यः । अर्जुनस्य आगमनोद्देशः एतावता सफलीभूतप्रायः आसीत् । अतः अर्जुनः दुर्योधनम् आक्रान्तुं प्रयत्नं कृतवान् । तदा कौरववीराः सर्वे अवरोधं कृतवन्तः । अर्जुनः तेषां मध्ये स्थितं कर्णं दूरात् अभिज्ञातवान् । ततः उत्तरम् उद्दिश्य – 'कर्णं लक्ष्यीकृत्य रथं चालयतु' इति सूचितवान् सः ।

कर्णस्य पृष्ठतः स्थिताः सर्वे योधाः अर्जुनं सम्मुखीकृतवन्तः । अर्जुनः तान् पराजितवान्, कांश्चन मारितवान् अपि । घोरयुद्धम् अनुवृत्तम् । अर्जुनेन मारितेषु वीरेषु कर्णस्य अनुजः अपि अन्यतमः आसीत् । अनुजस्य मरणं दृष्ट्वा क्रोधाविष्टः कर्णः अर्जुनं सम्मुखीकृतवान् । अर्जुनः वस्तुतः एतत् एव इष्टवान् आसीत् । कर्णार्जुनयोः घोरं युद्धं प्रवृत्तम् । अन्ये सर्वे तयोः युद्धं निर्निमेषदृष्ट्या पश्यन्तः स्थितवन्तः । किञ्चित्कालानन्तरं व्रणितः कर्णः युद्धात् विमुखः जातः ।

कौरववीराः अर्जुनस्य युद्धनैपुण्यम्, उत्तरस्य सारथ्यकौशलं च दृष्ट्वा नितरां सन्तुष्टाः जाताः ।

कर्णः यदा युद्धात् विमुखः जातः तदा अन्ये कौरववीराः युद्धम् अनुवर्तितवन्तः । अत्रान्तरे अर्जुनस्य दृष्टिः कृपाचार्ये पतिता । सः उत्तरं सूचितवान् यत् कृपाचार्यसमीपं रथं नयतु इति । अर्जुनस्य रथः कृपाचार्यरथं त्रिवारं प्रदक्षिणीकृत्य अग्रे आगत्य स्थितः । अर्जुनः शङ्खोद्घोषं कृतवान् । अनन्तरं प्रवृत्ते घोरे युद्धे कृपाचार्यः पराजयं प्राप्तवान् । कृपाचार्यस्य पराजयस्य अनन्तरं द्रोणः



युद्धार्थम् आगतवान् । अर्जुनः द्रोणं नमस्कृत्य - ''आचार्यवर्य ! वनवास-कारणतः वयं सर्वे श्रान्ताः स्म । तथापि युद्धे विमुखता तु न भवति अस्माकम् । यावत् भवान् माम् अभिलक्ष्य बाणप्रयोगं न करिष्यति तावत् अहं भवन्तम् उद्दिश्य बाणप्रयोगं न करिष्यामि'' इति उक्तवान् ।

ततः द्रोणः अर्जुनं लक्ष्यीकृत्य बाणप्रयोगं कृतवान् । वस्तुतः कौरवसेनायां द्रोणसमः महावीरः अन्यः कोऽपि न आसीत् । अर्जुनः तम् अपि बाणावरणेन आवृतं कृतवान् । एतत् दृष्टवत्यां कौरवसेनायां महान् हाहाकारः उत्पन्नः ।

एतत् दृष्ट्वा नितरां क्रुद्धः द्रोणसुतः अश्वत्थामा बाणप्रयोगेण अर्जुनं पीडितवान् । तदा अर्जुनः उत्तरं सूचितवान् यत् द्रोणसम्मुखात् रथम् अश्वत्थामसमीपं नयतु इति । उत्तरः तथैव कृतवान् । अर्जुना-श्वत्थाम्नोः युद्धं किञ्चित्कालं प्रवृत्तम् । अन्ते अर्जुनः एव विजयं प्राप्तवान् ।

एवं विजृम्भमाणः अर्जुनः पुनरपि द्रोणेन सह युद्धं कृतवान् । कर्णेन सह अपि पुनर्युद्धं प्रवृत्तम् । दुश्शासनेन सह अपि युद्धं प्रवृत्तम् । किन्तु सर्वे पराजिताः । तदा भीष्मः युद्धार्थम् आगतवान् ।

अनन्तरं भीष्मार्जुनयोः घोरं युद्धं प्रवृत्तम् । उभौ अपि परस्परम् अस्त्रप्रयोगं कृतवन्तौ । अर्जुनः तु धाराकारेण बाणवृष्टिम् एव कृतवान् । अर्जुनस्य बाणप्रहारं सोढुम् अशक्नुवन् भीष्मः रथोपस्थः एव विसंज्ञः जातः । तदा तदीयः सारथिः तस्य रथं सुदूरं नीतवान् ।

एतत् दृष्ट्वा दुर्योधनः एव स्वयं युद्धार्थम् आगतवान् । उभयोः अपि घोरातिघोरं युद्धं प्रवृत्तम् । युद्धसमये अर्जुनः एकेन प्रबलास्त्रेण दुर्योधनम् उरसि प्रहृतवान् । एतस्मात् प्रहारात् त्रस्तः दुर्योधनः रथं परिवृत्य पलायितवान् । एवं पलायमानं दुर्योधनं दृष्ट्वा अर्जुनः उपहासवचनानि उक्तवान् ।

तानि श्रुत्वा नितरां कुपितः दुर्योधनः प्रत्यागत्य पुनरपि युद्धे प्रवृत्तः जातः । तम् अनुसृत्य अन्ये कौरववीराः अपि आगताः । अर्जुनः तैः सर्वैः सह युद्धं कुर्वन् एव मोहनास्त्रं प्रयुक्तवान् ।

एतस्य परिणामतः कौरवसेनायां स्थितानां सर्वेषां हस्ततः अस्त्राणि पतितानि । सर्वे मूर्च्छां गतवन्तः ।

तदा अर्जुनः उत्तरम् उक्तवान् - ''मित्र ! शीघ्रं गत्वा भवान् वीराणाम् उष्णीषम् आनयतु । उत्तरया सूचितं खलु - पाञ्चालिकानाम् अलङ्कारार्थं वर्णमयानि वस्त्राणि आनेतव्यानि इति ? कर्णस्य वस्त्रं पीतवर्णीयम् । दुर्योधनस्य च हरितवर्णीयम् । नीलवर्णीयम् अश्वत्थाम्नः । तानि आनयतु भवान् । भीष्मसमीपं तु मा गच्छतु भवान् । यतः मया प्रयुक्तं मोहनास्त्रं तं न बाधते'' इति ।

उत्तरः रथात् अवतीर्य गत्वा प्रमुखाणाम् उष्णीषम् आनीय रथे उपविष्टवान् । यदा तदीयः रथः मूर्च्छां गतायाः सेनायाः पार्श्वे गच्छति स्म तदा कुरुवृद्धः भीष्मः अर्जुनं बाणप्रयोगेण अवरुद्धवान् । अर्जुनः तु भीष्मेण सह युद्धं कर्तुम् अनिच्छन् तदीयस्य रथस्य अश्वान् मारयित्वा अग्रे गतवान् ।

अत्रान्तरे दुर्योधनः सचेतनः जातः । निश्चिन्ततया गच्छन्तम् अर्जुनं दृष्ट्वा सः क्रोधेन - ''सुखेन गच्छन्तं तं दृष्ट्वा अपि किमर्थं मौनम् आश्रीयते ? सः यथा न गच्छेत् तथा अवरोधः क्रियताम्'' इति उच्चस्वरेण उक्तवान् दुर्योधनः ।

तत् श्रुत्वा भीष्मः - ''दुर्योधन ! विवेकः नष्टः न खलु भवतः ? सर्वान् मूर्च्छितान् कृत्वा अर्जुनः न मारितवान् यत्, केषाञ्चित् एव उष्णीषस्य प्राप्त्या तृप्तः अभवत् यत्, तत् तु अस्माकं सौभाग्यम् । पराजयम् अङ्गीकरोतु भवान् । अर्जुनः गाः नयतु नाम'' इति उक्तवान् ।

भीष्मस्य उपदेशस्य अनुगुणं कौरवाः निर्णीतवन्तः यत् पराजयम् अङ्गीकृत्य



प्रतिगन्तव्यम् इति । तेषां प्रतिगमनं दृष्ट्वा सन्तुष्टः अर्जुनः भीष्मं, द्रोणं, कृपम्, अश्वत्थामानम्, अन्यान् कौरवप्रमुखान् च लक्ष्यीकृत्य प्रणामबाणं प्रयुज्य अपरेण बाणप्रयोगेण दुर्योधनस्य किरीटं चूडारहितं कृतवान् ।

ततः सः उत्तरम् उद्दिश्य - ''शत्रवः पराजिताः । गावः रक्षिताः । अभीष्टं सिद्धम् । सन्तोषेण गृहं गच्छाव तावत्'' इति उक्तवान् ।

रथः शमीवृक्षसमीपं यदा आगतः तदा अर्जुनः - 'रथं स्थगयतु' इति उत्तरं सूचितवान् । ततः अस्त्राणि यथापूर्वं वृक्षे स्थापितानि । अर्जुनः सारथिस्थाने उपविशन् - ''पाण्डवाः सर्वे स्वस्य आस्थाने एव एतावत्पर्यन्तम् आसन् इति भवत्पिता यदि




जानीयात् तर्हि नितरां चिन्ताक्रान्तः भवेत् । अतः भवान् तं वदतु यत् अहम् एव युद्धं कृत्वा कौरवान् जितवान् इति'' इति सूचितवान् ।

''महानुभाव ! भवता यादृशं युद्धं कृतं तादृशं युद्धं कर्तुं मादृशेन पामरेण कथं वा शक्येत ? तथापि भवतः आज्ञा शिरोधार्या मम । अतः 'अहम् एव युद्धं कृतवान्' इति पितरं वदिष्यामि'' इति उक्तवान् उत्तरः ।

''वयं किञ्चित् विश्रान्तिसुखम् अनुभूय अश्वेभ्यः अपि आहारादिकं दत्त्वा अपराह्णे नगरं प्रविशाव । तदभ्यन्तरे भवान् गोपालकानां द्वारा पितरं प्रति जयवार्तां प्रेषयतु'' इति सूचितवान् अर्जुनः ।

अत्रान्तरे सुशर्माणं पराजित्य प्रत्यागतः विराटः सभाम् आयोजितवान् आसीत् । ज्येष्ठाः पुरप्रमुखाः वीराः च तस्य विजयस्य प्रशंसां कुर्वन्तः आसन् ।

कौरवसेना हठात् आक्रमणेन गोसमूहं वशीकृत्य नीतवती इति, तस्य विमोचनार्थम् उत्तरः बृहन्नलायाः सारथ्येन सह युद्धभूमिं गतवान् इति च अन्तःपुरस्त्रियः विराटं सूचितवत्यः ।

एतां वार्तां श्रुत्वा विराटः चिन्ताक्रान्तः सन् सुशर्मणा सह युद्धं कृत्वा प्रत्यागतान् सर्वान् वीरान् उद्दिश्य - ''उत्तरस्य साहाय्यार्थं शीघ्रं गच्छन्तु । नपुंसकस्य सारथ्यम् अङ्गीकृत्य रणरङ्गं गतः मम पुत्रः, न जाने, सजीवम् अस्ति वा न वा इति'' इति उद्वेगेन उक्तवान् ।

विराटस्य भयं दृष्ट्वा धर्मराजः सान्त्वनस्वरेण - ''बृहन्नलायाः सारथ्यम् अस्ति चेत् भवतः पुत्रः विजयी भविष्यति एव इत्यत्र नास्ति सन्देहः । न केवलं कौरवसेना, अपि तु देवासुरसेना आगता चेदपि तस्य पराजयः न भविष्यति'' इति उक्तवान् ।

अत्रान्तरे एव विराटेन वार्ता प्राप्ता यत् उत्तरः शत्रून् जित्वा, गवां विमोचनं साधयित्वा प्रत्यागच्छन् अस्ति इति । एतत् श्रुत्वा धर्मराजः - ''उत्तरः विजयीभूय प्रत्यागच्छन् अस्ति इति तु महतः सन्तोषस्य विषयः । बृहन्नलायाः सारथ्यस्य कारणतः एव एषः विजयः सिद्धः'' इति उक्तवान् ।

पुत्रस्य विजयवार्तां श्रुत्वा नितरां सन्तुष्टः विराटः वार्ताहराय विशेषपुरस्कारं दत्त्वा आज्ञापितवान् यत् समग्रं नगरम् अलङ्कृत्य उत्तरस्य सवाद्यस्वागतार्थं विशेषसन्नाहः

करणीयः इति । अनन्तरं सैरन्ध्रीम् उद्दिश्य - ''अक्षफलकम् आनयतु तावत् । कङ्केन सह क्रीडन् मनः विनोदयिष्यामि'' इति आदिष्टवान् सः।

उभौ अपि द्यूतक्रीडार्थम् उपविष्टवन्तौ । क्रीडासमये विराटः धर्मराजम् उद्दिश्य - ''पश्यतु कङ्कवर्य ! वीराधिवीरान् अपि जित्वा मम पुत्रः विजयी जातः अस्ति'' इति साभिमानम् उक्तवान् ।

तदा धर्मराजः - ''बृहन्नलायाः सारथ्ये सति जयः कथं वा न भवेत् ?'' इति पृष्टवान् ।

एतत् श्रुत्वा नितरां कुपितः विराटः - ''ब्राह्मणाधम ! मम पुत्रेण जये प्राप्ते अपि, नपुंसकस्य तस्य सारथेः प्रशंसां करोति वा भवान् ? किं वक्तव्यं, किं न वक्तव्यम् इति एतावत् अपि न जानाति खलु भवान् ! इदानीं भवान् क्षाम्यते मया । किन्तु पुनः एतादृशं वचनं यदि भवतः मुखात् निर्गच्छेत् तर्हि परिणामः घोरः स्यात् । जागरूकता भवतु भवतः'' इति उक्तवान् ।

तदा धर्मराजः - ''भीष्मः, द्रोणः, अश्वत्थामा, कर्णः, कृपः इत्यादिभिः युक्ता कौरवसेना इन्द्रेण अपि जेतुं न शक्या । एवं स्थिते का कथा भवतः पुत्रस्य ? कौरवसेनां जेतुं सामर्थ्यं तु बृहन्नलायाः अस्ति । अतः बृहन्नलायाः साहाय्यं प्राप्य भवतः पुत्रः कौरवसेनां जितवान् यत् तत्र न आश्चर्यं किमपि'' इति उक्तवान् ।

तत् श्रुत्वा विराटः कोपेन - ''पुनः अपि तदेव वचनम्'' इति वदन् अक्षेण धर्मराजं मुखे प्रहृतवान् । धर्मराजस्य नासिकायां सः



अक्षः पतितः । ततः रक्तधारा निर्गता । यावत् रक्तबिन्दवः भूमौ न पतिताः ततः पूर्वम् एव द्रौपदी धावन्ती आगत्य अञ्जलिना तत् रक्तं सङ्गृहीतवती । ततः धर्मराजस्य आन्तर्यं जानती सा सुवर्णस्थालिकया रक्तं सङ्गृहीतवती ।

अत्रान्तरे द्वारपालकः अन्तः आगत्य - ''उत्तरः बृहन्नला च आगतवन्तौ'' इति इति उक्तवान् ।

''तयोः दर्शनार्थम् अहं नितरां कुतूहली अस्मि । अतः तौ अचिरात् अन्तः प्रवेशयतु'' इति द्वारपालकम् उक्तवान् विराटः ।

तदा धर्मराजः द्वारपालकम् उद्दिश्य मन्दस्वरेण - ''बृहन्नलाम् अन्तः मा प्रेषयतु । उत्तरः एकः एव अन्तः

आगच्छतु । युद्धात् अन्यत्र यदि कोऽपि मां व्रणितं कुर्यात् तर्हि तं हनिष्यति बृहन्नला । एषा तस्याः प्रतिज्ञा अस्ति । यदि सा मम रक्तं पश्येत् तर्हि भवतः राजानं सकुटुम्बं नाशयेत्'' इति उक्तवान् ।

ततः अन्तः आगतः उत्तरः पितरं साष्टाङ्गं नमस्कृत्य, धर्मराजं चापि नमस्कृत्य, तदीयनासिकातः रक्तस्रावं दृष्ट्वा खेदेन - ''एतं महानुभावं कः एवं पीडितवान् ? एतत् हीनकृत्यं कस्य वा अविवेकिनः ?'' इति पृष्टवान् ।

''एषः अविवेकी नपुंसकं प्रशंसति स्म, न तु भवतः पराक्रमम् । अतः अहम् एव एवं प्रहृतवान्'' इति उक्तवान् विराटः ।

''किम् इदम् अकार्यं कृतं भवता ? ब्राह्मणशापः वडवाग्निः इव अस्माकं सर्वनाशं करिष्यति । अतः एतस्य स्नेहस्य सम्पादनं श्रेयस्करम्'' इति पितरं सूचितवान् उत्तरः ।

विराटः धर्मराजं क्षमां याचितवान् । तदा धर्मराजः - ''राजन् ! मम कोपः तु तदा एव शान्तः । मम रक्तस्य भूमौ पतनं भवतः राज्यस्य एव हानिकरम्'' इति उक्तवान् ।

एतावता रक्तस्रावः स्थगितः आसीत् । तदनन्तरं बृहन्नला अन्तः आगता । सा विराटं धर्मराजं च विनयेन नमस्कृत्य स्थितवती ।

तदा बृहन्नला अपि यथा शृणुयात् तथा विराटः उत्तरम् उद्दिश्य उच्चस्वरेण - ''वत्स ! कुलोचितः व्यवहारः कृतः अद्य भवता । भवादृशः शूरः अन्यः नास्ति एव लोके । महापराक्रमी कर्णः कथं भवता जितः ? महायोद्धा भीष्मः कथं वा पराजितः ? द्रोणः, तत्पुत्रः अश्वत्थामा च महाशूरौ । कृपाचार्यं दृष्ट्वा तु वीराधिवीराः अपि शरणं गच्छन्ति । एतान् सर्वान् जित्वा भवान् गवां विमोचनं साधितवान् यत् तत् तु नितरां श्लाघ्यम्'' इति उक्तवान् ।

तत् श्रुत्वा उत्तरः - ''गवां विमोचनं मया न साधितम् । शत्रूणां जयः अपि मया न सम्पादितः । कश्चन दैवांशसम्भूतः महापुरुषः तत्सर्वं कृतवान् । शत्रून् दृष्ट्वा पलायमानं मां दृष्ट्वा सः रथम् आरुह्य माम् एव सारथिं कृत्वा युद्धं कुर्वन् जयं सम्पादितवान्'' इति उक्तवान् ।

- (अनुवर्तते)



# रसवार्ताः

## विद्युदाघातस्य अनभिज्ञः

विद्युदाघातः भवेत् इति भयेन वयं विद्युतः उपकरणानां समीपे बालानां गमनं निवारयामः । यतः विद्युदाघातेन कदाचित् प्राणवियोगः अपि



सम्भवति । किन्तु केरलराज्यस्य क्विलान्नगरस्थस्य राजमोहनस्य विद्युदाघातः विनोदजनकः अस्ति । विद्युतः तन्त्रेः स्पर्शेन अपि सः आघातं न अनुभवति । सः स्वस्य १३ वयसि जीवने जुगुप्सितः सन् मरणं प्राप्तव्यम् इति निश्चित्य विद्युत्स्तम्भम् आरुह्य विद्युत्प्रवाहयुक्तां तन्त्रीं स्पृष्टवान् । परन्तु आश्चर्यं नाम तस्य किमपि न अभवत् । स्वस्य शरीरं विद्युत् किमपि न करोति इति सः अभिज्ञातवान् । तदारभ्य सः स्वस्य शरीरस्य तत् सामर्थ्यं जीविकायै उपयुक्तवान् । इदानीं सः सर्वत्र प्रदर्शनानि कुर्वन् जीवनं कुर्वन् अस्ति । सः इन्सुलेषन्- रहितया तन्त्र्या स्वशरीरं वेष्टयति । पश्चात् तत्र ३८,००० वोल्ट् विद्युतं प्रवाहयति । परीक्षकेण (tester) परीक्षायां कृतायां अग्निः उद्भवति । परं विद्युता तस्य शरीरस्य कापि हानिः जायमाना न दृश्यते । १९८६ तमे वर्षे देहलीनगरस्थया विश्ववैज्ञानिकतान्त्रिकसंस्था अपि सः परीक्षितः अस्ति । तस्याः संस्थायाः सदस्याः अपि राजमोहनस्य शरीरस्य वैशिष्ट्यं विवरीतुम् असमर्थाः जाताः सन्ति । विद्युन्मोहनः इति नाम्ना प्रसिद्धस्य अस्य युवकस्य नाम १९९२ तमे वर्षे गिन्निस् पुस्तके अपि उल्लिखितम् अस्ति ।

## सुवर्णहृदयम्

पञ्जाबस्य नरेन्द्रकुमारस्य सुवर्णहृदयम् अस्ति इति वार्ता आश्चर्यं जनयेत् खलु ? देहल्याः कस्मिंश्चित् चिकित्सालये सः स्वस्य हृदयस्य शस्त्रचिकित्सां कारितवान् । तदा तस्य हृदयस्य धमनिषु उत्पन्नः अवरोधः निवारितः । हृदयं प्रति रक्तं पूरयितुं सहायकत्वेन २४ क्यारेट्सुवर्णस्य वैर्मेष् अन्तः योजितम् तस्मिन् समये । अस्य भारः एकग्राम्मितः अस्ति प्रायः । सामान्यतः एतादृशे अवसरे स्टैन्लेस्स्टील् मेष् - उपयोगम् एव कुर्वन्ति वैद्याः । विश्वे ऐदम्प्रथमतया अधुना सुवर्णस्य मेष् योजितं अस्ति । एतत् स्टैनलेस्स्टील् अपेक्षया उत्तमम्, एतेन कोऽपि दुष्परिणामः न भवति इति तज्ज्ञाः वदन्ति ।





# भरतपुरस्य पक्षिधाम

देहलीतः १८० कि.मी.दूरे विद्यमानम् इतिहासप्रसिद्धं नगरम् एव भरतपुरम् । अस्मिन् नगरे १८ शतके निर्मितं दुर्गम् अपि अस्ति । अत्र 'केलडेव् न्याषनल् पार्क्' नामकं पक्षिधाम अस्ति । एतत् द्रष्टुं प्रतिदिनं बहवः प्रवासिनः अत्र आगच्छन्ति । अत्र विद्यमानस्य देवालयस्य





कारणेन एव तस्य तत् नाम आगतम् अस्ति । अस्मिन् कच्छे सान्द्राः गुल्माः, तडागाः, कुल्याः, वने इव व्याप्तानां वृक्षाणां मध्ये क्षुपाः(स्थाणवः) च सन्ति । अतः तत् स्थानं विविधेभ्यः प्रदेशेभ्यः आगतानां विविधपक्षिणाम् अण्डं स्थापयितुम्, वंशवर्धनाय च अनुकूलकरं स्थलम् अस्ति ।

अत्र प्रायः ३२८ विधाः पक्षिणः उपलभ्यन्ते । उत्तरसैबीरिया, चैना इत्यादिभ्यः दूरदेशेभ्यः अपि पक्षिणः अत्र वासार्थम् आगच्छन्ति । दूरप्रदेशेभ्यः आगच्छत्सु पक्षिसु सैबीरियादेशस्य बकाः बहु रमणीयाः ।

अन्यानि वनानि इव इदम् अपि पूर्वं भरतपुरस्य महाराजानां मृगयायाः स्थानम् आसीत् । किन्तु क्रि.श.१९६४ तमे वर्षे ते एव - 'अत्र मृगया निषेद्धव्या' इति सर्वकारं निवेदितवन्तः ।

''अन्ताराष्ट्रियस्तरीयम् इदं भरतपुरं पक्षिणां स्वर्गः'' इति पक्षिप्रेमिणां अभिप्रायः । अत्र विद्यमानान् तडागान् गत्वा समीपतः पक्षिणः द्रष्टुं अस्मिन् पक्षिधाम्नि विद्यमानाः लघ्व्यः नौकाः साहाय्यं कल्पयन्ति । अत्र कांश्चन प्रदेशान् प्रति द्विचक्रिकया, त्रिचक्रिकया वा गन्तुम् अपि अनुमतिः अस्ति । अत्र न केवलं पक्षिणः, अपि तु हरिणाः, वनवराहाः, मयूराः च सन्ति । कदाचित् अजगरान् अपि अत्र द्रष्टुं शक्नुमः ।

# धर्मगुप्तः

चन्द्रवंशीयः राजा धर्मगुप्तः कदाचित् मृगयार्थम् अरण्यं गतवान् आसीत् । सायङ्कालपर्यन्तम् अपि मृगयायां नितरां लीनः राजा अज्ञाततया एव अङ्गरक्षकेभ्यः दूरं गतः अभवत् । अल्पे एव काले अन्धकारः प्रसृतः । प्रतिगमनमार्गम् अजानन् राजा रात्रिम् अरण्ये एव यापयितुम् इच्छन् क्रूरजन्तुभ्यः आत्मनः रक्षणार्थम् एकं वृक्षम् आरूढवान् ।

राज्ञः आरोहणात् पूर्वम् एव कश्चन भल्लूकः तं वृक्षम् आरूढवान् आसीत् । सः धर्मगुप्तं दृष्ट्वा अवदत् - ''राजन् ! अद्य आवाभ्यां सिहांत् आत्मा रक्षणीयः अस्ति । भवान् नितरां श्रान्तः अस्ति । अतः मध्यरात्रपर्यन्तं भवान् निद्रां करोतु । तत्समये अहं जागरितः सन् भवतः रक्षणं करिष्यामि । ततः भवता उत्थाय प्रातःकालपर्यन्तं मम रक्षणं करणीयम् । एतत् अनुमतं वा भवतः ?'' इति ।

राजा एतत् अङ्गीकृतवान् । ततः सः शाखाम् आश्रित्य निद्रां कृतवान् ।

किञ्चित्कालानन्तरं तत्र एकः सिंहः आगतः । सः वृक्षस्य ऊर्ध्वभागं पश्यन् भल्लूकम् उद्दिश्य - ''मित्र ! भवान् तं मानवं पातयतु । तस्य खादनेन अहं मम बुभुक्षां निवारयामि । भवन्तं न पीडयामि च'' इति अवदत् ।

भल्लूकेन एषः प्रस्तावः न अङ्गीकृतः । सिंहः ततः अगच्छत् । अर्धरात्रसमये राजा जागरितः । सन्ध्यनुगुणं भल्लूकः निद्राम् अकरोत् । अल्पे एव काले सिंहः पुनः अपि तत्र आगत्य - ''अयि, मानव ! भवान् तं भल्लूकम् अधः पातयति चेत् अहं भवन्तं न पीडयिष्यामि'' इति अवदत् ।

अनन्तरक्षणे एव राजा भल्लूकम् अधः पातितवान् । झटिति जागरणं प्राप्तवान् भल्लूकः कथञ्चित् शाखग्रहणेन भूमौ पतनं निवार्य - ''अये राजन्, कृतघ्न ! विश्वासाद्रोहं कृतवान् भवान् उन्मत्ततां प्राप्नोतु'' इति अशपत् ।

ततः धर्मगुप्तः उन्मत्तः सन् अनेकानि कष्टानि अनुभूतवान् । दीर्घकालानन्तरं सः पश्चात्तापम् अनुभूय जैमिनि-महर्षेः कृपापात्रतां प्राप्य तस्य सूचनायाः अनुगुणं तीर्थस्नानं कृत्वा शापात् विमुक्तः अभवत् ।

कृतघ्नतातः अधिकं पापम् अन्यत् नास्ति इत्येतां नीतिं बोधयति एषा धर्मगुप्तस्य कथा ।



# शिरस्त्राणि

इदानीम् आतपकाले - शैत्यकाले वा शिरस्त्रधारिणां सङ्ख्या बहु न्यूना जाता अस्ति । १९४० क्रिस्ताब्दपर्यन्तं गृहात् बहिर्गमनसमये सामान्यतः सर्वेऽपि शिरस्त्रं धरन्ति स्म । परन्तु एतेषु दिनेषु शिरस्त्रं कस्यचित् समवस्त्रस्य अङ्गरूपेण, कस्यचित् मतसम्बद्धवस्त्ररूपेण वा ध्रियमाणम् अस्ति । 'रश्यन् फर् ह्याट्' नामकं शिरस्त्रं शरीरस्य उष्णतायाः रक्षणं करोति । कर्णे यथा शैत्यवायुः न प्रविशेत् तथा अपि रक्षणं करोति । 'स्पानिष् साम्ब्रिरो' - शिरस्त्रम् आतपात् नेत्रे, सूर्याघातात् मस्तिष्कं च रक्षति । एतत् केनचित् चर्मविशेषेण निर्मीयते इति कारणतः एतत् शैत्यात् अपि रक्षणम् करोति । उत्तर-अमेरिकायाः 'रेड् इण्डियन्स्' जनैः यत् ध्रियते तत् गाम्भीर्यस्य अधिकारस्य च द्योतकं भवति । (चित्रं पश्यतु) तत्रत्याः नायकाः बृहत् शिरस्त्रं धरन्ति । बिषप्स्जनैः यत् ध्रियते तत् तेषां स्तरं श्रेष्ठतां च द्योतयति । ईजिप्ट्देशे आतपात् आत्मानं रक्षितुं राष्ट्रियवेषभूषणत्वेन च 'टर्बन्' धरन्ति ।





# इन्द्रधनुः





## प्रकृतेः अनुरूपता

प्रकृतिसहजस्य शरीरस्य अनुरूपतायाः सुन्दरम् उदाहरणं पतङ्गः । पतङ्गस्य शरीरस्य मध्ये एकां रेखां लिखित्वा परिशीलयामः चेत् ज्ञायते यत् भागद्वयस्य अङ्गानां परिमाणे आकारे च यः कोऽपि भेदः न विद्यते इति । एवं शरीरस्य अवयवसमानत्वं 'सिमेट्रि' इति कथ्यते । या रेखा विभागं करोति तां 'विभागरेखा' इति वदन्ति । मानवशरीरे, अपि एतादृशी एव व्यवस्था द्रष्टुं शक्यते । शिल्पशास्त्रस्य शास्त्रीयशैल्याः एतत् अवयवसंस्थानम् एकं प्रमुखलक्षणम् अस्ति । एषा शैली युरोप्खण्डस्य पुनरुज्जीवनकाले ज्जीवनं प्राप्य १७-१८ शतकयोः, १९ शतकस्य आदिभागे च जनप्रिया जाता ।

स्वातन्त्र्यस्य सुवर्णमहोत्सवस्य अवसरे चन्दमामायाः उपहारः

# प्रथमः स्वातन्त्र्यसङ्ग्रामः



*(आंग्लानाम् ईस्ट्-इण्डियासंस्थायाः गवर्नर्-जनरल् डाल्हौसिना "भारतीयराजैः क्रियमाणः दत्तपुत्रस्वीकारः शासनविरुद्धः । अतः सन्तानरहितानां राज्यं संस्थायाः अधीनं भविष्यति" इति उद्घुष्टम् । एतेन अङ्कुशरहितेन शासनेन झान्सीराज्ञी लक्ष्मीबायी नानासाहेबपेश्वे इत्यादयः राज्याधिकारात् च्युताः अभवन् । तस्मिन् एव अवसरे सहस्राधिकाः सैनिकाः आंग्लानां अन्याय्यशासनम् असहमानाः तान् विरोद्धुं सज्जाः अभवन् । भारतपुरस्य सैनिकः मङ्गलपाण्डे आंग्लान् विरुध्य आत्मार्पणं कृत्वा अन्येभ्यः सैनिकेभ्यः प्रेरणां दत्तवान् । सर्वैः सैनिकैः सम्भूय सङ्घर्षः करणीयः इति नानासाहेबः काञ्चित् योजनां कृतवान् । यदा झान्सीराज्ञी लक्ष्मीबायी नानासाहेबं द्रष्टुम् आगता आसीत् तदा मीरत्मध्ये सैनिकैः सङ्घर्षः आरब्धः अस्ति इति वार्ता आगता। तदनन्तरम्---)*

मीरत्नगरे ब्रिटिश्शासनस्य विरोधं कृत्वा तत्रत्यान् अधिकारिणः च मारयित्वा सैनिकाः उत्साहेन देहलीं प्रति प्रस्थितवन्तः । देहल्यां वर्तमानं ब्रिटिष्सेनाम् अपि जित्वा ते मोगलानाम् उत्तराधिकारिणं बहादूरषावर्यं चक्रवर्तिस्थाने पुनः प्रतिष्ठापितवन्तः । बहादूर्षावर्यस्य अधिकारं स्वायत्तीकृत्य तं कञ्चित् सामान्यं नागरिकं कृतवान् ब्रिटिष्सर्वकारः अस्मिन् अवसरे असहायः सन् किमपि कर्तुम् अशक्नुवन् मौनम् आश्रितवान् ।

एतां वार्तां श्रुत्वा झान्सीराज्ञी लक्ष्मीबायी नानासाहेबम् एवम् उक्तवती - "अग्रज ! मीरत्नगरस्य युवकानां साहसकार्यं दृष्टवद्भिः अपि अस्माभिः इतः परं तूष्णीं भवितव्यं किम् ? मार्गदर्शकस्य योग्यस्य नायकस्य अभावे अपि ते युवकाः एतादृशम् अपूर्वं कार्यं साधितवन्तः सन्ति । बुद्धिमान्,

धैर्यवान्, साहसी भवान् एतदवसरे विश्वासपात्रैः अनुचरैः सह इतोऽपि अधिकं कार्यं साधयितुं निश्चयेन शक्ष्यति खलु ?'' इति ।

''निश्चयेन । राष्ट्रहितार्थं न केवलं मया भवत्या वा, अपि तु अस्मादृशैः देशभक्तैः बहुभिः आत्मार्पणं करणीयम् अस्ति । एषा भगवदिच्छा अपि । भवतु, अधुना भवती निश्चिन्ता सती गत्वा आगच्छतु'' इति तस्याः आप्रच्छनं कृतवान् नानासाहेबः ।

लक्ष्मीबायी स्वराज्यं प्रति प्रस्थितवती । तया सह अङ्गरक्षकान् सेनां च प्रेषितवान् नानासाहेबः । लक्ष्मीबायी सुरक्षिततया झान्सीनगरं प्राप्तवती ।

मीरत्नगरे सैनिकानां विद्रोहस्य अनन्तरं ब्रिटिष्जनाः जागरूकाः सन्तः स्थानीयानां चलनवलनानां, कार्यकलापानां च निरीक्षणम् आरब्धवन्तः । तस्मिन् समये कान्पुरे सैन्यस्य प्रमुखः वीलर्नामकः आंग्लदलपतिः आसीत् । सः नानासाहेबं प्रति - ''यदि सैनिकाः अत्र विद्रोहम् आरभन्ते तर्हि भवान् मम साहाय्यं कर्तुं शक्नोति किम् ?'' इति पृष्ट्वा एकं पत्रं लिखितवान् ।

पूर्वं कदाचित् नानासाहेबः तस्य अनुकूलः एव आसीत् । किन्तु अधुना नानासाहेबः तस्मै एवम् उत्तरं लिखितवान् - ''यदि तादृशी परिस्थितिः उद्भवेत् तर्हि अलहाबाद् प्रति, अन्यं कश्चित् ब्रिटिष्-सेनाबाहुल्येन युक्तं प्रदेशं प्रति वा भवतः गमनम् उचितम् इति अहं भावयामि'' इति । एवं सूचनां दत्त्वा सः मौनम् आश्रितवान् ।

किन्तु वीलरः नानासाहेबस्य सूचनां गम्भीरतया न परिगणितवान् । तत्र ब्रिटिष्-अधिकारिणः पूर्वं यथा व्यवहारं कुर्वन्तः आसन् ततोऽपि घोरतरं दुःशासनम्





आरब्धवन्तः । लघुदोषाणां निमित्तम् अपि घोरं दण्डनं हिंसां च दत्त्वा बहुधा अपमाननं कुर्वन्ति स्म । केचन तत्सर्वं सहनया सहन्ते स्म । पुनः केचन तदा विरोधं कुर्वन्ति स्म । विरोधं प्रकटितवत्सु तादृशेषु कश्चित् एकदा एवम् उक्तवान् - ''अयि भोः ! भवन्तः पेष्वेवर्यम् अधिकाररहितं कृतवन्तः सन्ति । अस्माकं हिंसया पेष्वेवर्ये अस्मदीया श्रद्धा न्यूना भविष्यति इति स्वप्ने अपि भवन्तः न भावयन्तु'' इति ।

पूर्वसज्जतारूपेण कान्पुरे नूतनतया एकं दुर्गं निर्मातव्यम् इति निश्चितवान् वीलरः । निश्चयानुसारं कान्पुरे वसतां ब्रिटिष्परिवाराणां वासार्थं, तेषाम् आहारवस्तूनाम् आयुधानां च सङ्ग्रहणार्थं च अनुकूलस्य महतः दुर्गस्य निर्माणकार्यम् अपि आरब्धम् । महता वेगेन कार्यम् अनुवृत्तम् अपि ।

किन्तु तावति काले एव अपायः आपतेत् इति वीलरः न ऊहितवान् आसीत् । नानासाहेबस्य मित्रं तात्याटोपे, मन्त्री अजमुल्लाखानः, अन्ये केचन च मिलित्वा ब्रिटिष्जनाः यथा न जानीयुः तथा रहसि महतः विद्रोहस्य सज्जतां कृतवन्तः । ते एकस्मिन् दिने मध्यरात्रसमये कान्पुरनगरे विद्यमानं ईष्ट-इण्डियासंस्थायाः धनागारम् आयुधालयं च आवृतवन्तः। तदा तस्य रक्षकाः आङ्ग्लसैनिकाः गुलिकास्त्रप्रयोगम् आरब्धवन्तः। तदा प्रवृत्ते युद्धे केचन आक्रान्तवन्तः सैनिकाः मृताः। तथापि कासाञ्चित् घण्टानां युद्धस्य अनन्तरं तत् भवनं ते वशीकृतवन्तः।

तत् दृष्ट्वा वीलरः तत्र विद्यमानान् ब्रिटिष्परिवारजनान् सूचितवान् यत् भवन्तः सर्वे रक्षणार्थं नूतनतया निर्मितं दुर्गं गच्छन्तु इति । ब्रिटिष्कुटुम्बाः गणेषु दुर्गं प्रति प्रस्थितवन्तः । तदा विद्रोहिणः केऽपि तान् न निरुद्धवन्तः । अपि च तेषां कमपि क्लेशम् अपि न दत्तवन्तः । यतः ''अस्माकं, शत्रूणां च बलं ज्ञात्वा पश्चात् अस्माभिः कार्यप्रवृत्तैः भाव्यम् । न तु अस्माकम् इच्छानुसारम्'' इति नानासाहेबः तान् आज्ञापितवान् आसीत् ।

ब्रिटिष्जनानां सुरक्षिततया दुर्गस्य प्रवेशस्य अनन्तरं नानासाहेबः - ''लुण्ठाकाः कान्पुरस्य नूतनं दुर्गम् अपि आक्रमेयुः'' इति जागरयन् वीलराय पत्रम् एकं प्रेषितवान् ।

तत् दृष्ट्वा कश्चित् सहचरः नानासाहेबम् एवं पृष्टवान् – ''आक्रमणात् पूर्वम् एव एवं शत्रूणां जागरणं युक्तं किम् ?'' इति ।

''युक्तम् एव । यद्यपि ते कुयुक्त्या अस्माकं देशं आक्रान्तवन्तः सन्ति, तथापि अस्माभिः धर्ममार्गेण एव युद्धं करणीयम् । तेषां विरुद्धं यत् पदम् अग्रे निक्षिपामः तत् सर्वं बहिरङ्गतया एव भवति इत्यपि ते सूचनीयाः । तैः सह युद्धार्थं वयं सर्वदा सन्नद्धाः एव खलु ? अतः अस्माकं सज्जीकरणाय तेभ्यः कश्चन अवकाशः दीयते चेत् न कोऽपि दोषः'' इति उक्तवान् नानासाहेबः ।



दुर्गस्य आक्रमणकार्यम् आरब्धम् । यद्यपि दुर्गस्य अन्तः विद्यमानाः सैनिकाः सुशिक्षिताः आसन्, तथापि ते आक्रमणकारिणः सम्मुखीकर्तुं न शक्ताः । कतिचित् एव दिनेषु दुर्गे विद्यमानः शस्त्रसङ्ग्रहः समाप्तः । अन्ते पातुं जलम् अपि न आसीत् तेषाम् । अतः अनन्यगतिकतया ब्रिटिष्-अधिकारिणः 'सन्धिं कर्तुं सिद्धाः स्मः' इति सूचयन्तः शान्तेः सङ्केतभूतं ध्वजम् उड्डायितवन्तः ।

''शरणम् आगच्छन्तु'' इति नानासाहेबः तान् आज्ञापितवान् । अधिकारिणः दुर्गात् बहिः आगताः । नानासाहेबस्य सैनिकाः तान् नानासाहेबस्य पुरतः आनीतवन्तः ।

तदा नानासाहेबः तान् उद्दिश्य – ''भवतां कार्यं समाप्तम् । अधुना भवद्भिः सह अस्माभिः कथं व्यवहरणीयम् इति भवन्तः अपेक्षन्ते ?'' इति पृष्टवान् ।

''अ[illegible] अलहबादे अस्मदीयानां समीपं गमिष्यामः'' इति उक्तवन्तः ते अधिकारिणः ।

किञ्चित्कालस्य चर्चायाः अनन्तरं नानासाहेबः तस्य सहचारिणः च ततः ब्रिटिष्जनानां गमनाय अनुमतिं दत्तवन्तः । अनन्तरं तदर्थम् अपेक्षिताः सज्जताः अपि त्वरितम् एव आरब्धाः ।

नौकाः प्रयाणाय योग्याः यथा स्युः तथा समीकरणं कारयितुं किञ्चित् धनम् अपि दत्तवान् नानासाहेबः ।

एकस्मिन् दिने सूर्योदयसमये उपसहस्त्रम् आङ्ग्लस्त्रीपुरुषाः अलहाबादं प्रति प्रयाणाय नौकाम् आरूढवन्तः । तात्याटोपेः अनुमतिं प्राप्य नौकाः प्रयाणम् आरब्धवत्यः ।

किन्तु तदा आकस्मिकतया काचित् दुर्घटना प्रवृत्ता एव । प्रतिष्ठमानाः नौकाः द्रष्टुं सहस्राधिकाः जनाः नदीतीरे सम्मिलितवन्तः आसन् । तेषु ब्रिटिष्-अधिकारिणां दौर्जन्यस्य कारणेन स्वस्य पितृसहोदरादीनां वियोगं प्राप्तवन्तः केचन आसन् । कान्पुरे ईष्ट्-इण्डिया-संस्थायाः शासनं समाप्तम् इति वार्ता सर्वत्र प्रसृता आसीत् इति कारणेन परितः स्थितेभ्यः प्रदेशेभ्यः अपि केचन सैनिकाः तत्र आगतवन्तः आसन् ।

ते सैनिकाः अकस्मात् नौकायाम् उपविष्टानाम् उपरि गुलिकाप्रयोगम् आरब्धवन्तः । तेन प्रेरिताः अन्ये केचन जले उत्प्लुत्य नौकायां विद्यमानानां जले क्षेपणम् आरब्धवन्तः । केषुचित् एव क्षणेषु तत् भयानकम् एव अभवत् । 'एतान् सजीवं त्यजामः चेत् पुनः अन्यैः सहकारिभिः सह प्रत्यागत्य एते प्रतीकारं करिष्यन्ति' इति संशयेन अन्ये केचन सैनिकाः तेषां निर्दयं मारणम् अपि आरब्धवन्तः ।

नानासाहेबेन विषयस्य ज्ञानात् पूर्वम् एव एतादृशं भयानकं कृत्यं प्रवृत्तम् एव । 'महिलाः बालाः च न मारणीयाः' इति नानासाहेबः तान् हननिरतान् जागरितवान् इति कारणेन १२५ महिलाः बालाः च रक्षिताः अभवन् । नानासाहेबः तान् स्वगृहं नीत्वा तेषां वसतिभोजनादीनां व्यवस्थां कृतवान् । कानिचन दिनानि तान् स्ववेशे स्थापयित्वा पश्चात् सुरक्षिततया तान् अलहाबादं प्रति प्रेषितवान् ।

तात्कालिकरूपेण संस्थायाः शासनं परिसमाप्तिं गतम् इति कारणेन तस्य प्रदेशस्य शासकत्वेन नानासाहेबः जनैः नियुक्तः । समग्रनगरे एव उत्सवस्य वातावरणम् आसीत् । ब्रिटिष्जनानां पीडा शाश्वतरूपेण परिहृता अभवत् इति सर्वे चिन्तितवन्तः । ये ब्रिटिष्जनाः जीवन्तः सन्ति ते शीघ्रमेव स्वदेशं प्रति गमिष्यन्ति इति एकैकः अपि चिन्तितवान् आसीत् । अतः सर्वे महता सन्तोषेण आसन् ।

किन्तु कान्पुरे यदा विजयोत्सवः प्रचलन् आसीत् तदा झान्सीनगरं प्रशान्तं न आसीत् ।

- (अनुवर्तते)





# उपकारस्पर्धा

सीतापुरे देवदासः नाम धनिकः आसीत् । सः कश्चित् दुष्टबुद्धिः आसीत् । प्रतिदिनं कञ्चित् पीडयित्वा सन्तोषम् अनुभवति स्म सः ।

देवदासः प्रतिदिनं स्वगृहस्य वितर्देः उपरि कैश्चित् मित्रैः सह उपविशति स्म । तदा येषां धनस्य आवश्यकता भवति तदा ते एतस्य समीपम् आगत्य तेन दीयमानां शारीरकमानसिकवेदनाः सर्वाः अनुभूय धनं प्राप्य ततः गच्छन्ति स्म । एवं प्रतिदिनं वेदनाम् अनुभूय असन्तोषेण एव जनाः तस्मात् धनं प्राप्नुवन्ति स्म इति कारणेन दिने दिने तस्य शत्रूणां संख्या वर्धमाना एव आसीत् ।

कदाचित् तस्य देशस्य महाराजः वेशान्तरं धृत्वा देशसञ्चारं कुर्वन् सीतापुरम् आगतः । देवदासस्य विषयं श्रुत्वा सः तस्य समीपम् आगतवान् । तस्मिन् दिने महाराजः कृषकस्य वेषं धृतवान् आसीत् ।

महाराजस्य आगमनसमये देवदासः यथापूर्वं मित्रैः सह स्वगृहस्य वितर्देः उपरि उपविष्टवान् आसीत् । वेषान्तरं धृत्वा आगतं महाराजं दृष्ट्वा 'एषः कश्चित् दरिद्रः कृषकः' इति मत्वा देवदासः तम् उद्दिश्य – ''किं भोः ! कियत् धनम् आवश्यकं भवतः ?'' इति पृष्टवान् ।

महाराजः – ''श्रीमन् ! दश सुवर्ण-नाणकानि अपेक्षितानि'' इति उक्तवान् ।

''तर्हि भवान् अधुना कश्चन वृषभः भवेत् । भवतः शिरसि शृङ्गे बद्ध्वा, पुष्पैः अलङ्कृत्य ग्रामे आटयामः । भवता सह वाद्यवादकाः अपि आगमिष्यन्ति । भवता दश गृहाणि गन्तव्यानि, तत्र भविष्यम् अपि वक्तव्यम्'' इति उक्तवान् देवदासः ।

एतत् श्रुत्वा महाराजः क्रुद्धः अभवत् । सः स्ववेषं निष्कास्य – ''अहम् एतस्य



देशस्य महाराजः अस्मि । भवतः क्रूरतायाः विषये श्रुतवान् आसम् । अद्य प्रत्यक्षं दृष्टवान् । भवान् मनुष्यः न, अपि तु राक्षसः । तदर्थं भवते आजीवनकारा-गृहवासरूपं दण्डनं यच्छन् अस्मि । अनुभवतु तावत्'' इति उक्तवान् ।

अनिरीक्षितात् एतादृशात् परिणामात् भीतः देवदासः महाराजस्य पादयोः पतित्वा - ''क्षन्तव्यः अहम् । इतः परं कदापि एवं न करिष्यामि'' इति बहुधा प्रार्थितवान् । किन्तु राज्ञः कोपः न शान्तः । तावति काले प्रवृत्तं सर्वं ज्ञातवान् ग्रामप्रमुखः धावन् तत्र आगत्य महाराजम् उक्तवान् - ''प्रभो ! एतस्य देवदासस्य पिता आपत्काले भवतः पितुः साहाय्यं कृतवान् आसीत् । अतः राजपरिवारेण देवदासस्य कुटुम्बस्य विशेषरक्षणव्यवस्था कृता अस्ति । मन्त्री अपि एतं विषयं जानाति । अतः ग्रामप्रमुखः सन् अपि अहम् अद्यपर्यन्तम् एतं न दण्डितवान् अस्मि । एतस्य दण्डनं धर्मसम्मतं न । अतः देवदासाय आत्मनः परिष्कारार्थम् एकः अवकाशः दातव्यः'' इति प्रार्थितवान् ।

तावता किञ्चित् शान्तः महाराजः - 'ग्रामप्रमुखस्य वचने अपि यथार्थता अस्ति' इति ज्ञात्वा देवदासम् उक्तवान् - ''रे दुष्ट ! ग्रामप्रमुखस्य वचनानुसारं भवते एकम् अवकाशं ददामि । इतः मासं यावत् भवता परमशत्रोः उपकारः सेवा च करणीया । सः अपि भवतः उपकारं करिष्यति । उपकारकरणे यदि भवान् तम् अतिशेते तर्हि भवान् क्षम्यते मया'' इति ।

ग्रामे सर्वे देवदासस्य शत्रवः एव आसन् । अतः शत्रोः चयने कोऽपि क्लेशः तु न आसीत् । तथापि महाराजस्य वचनस्य श्रवणस्य समनन्तरं देवादासः गोविन्दं स्मृतवान् ।

कदाचित् गोविन्दस्य पादे क्षतम् जातम् आसीत् । औषधोपचारस्य अभावेन क्षतं व्रणरूपेण परिवर्तितम् अभवत् । दरिद्रः गोविन्दः यदा वैद्यस्य समीपं गतवान् तदा सः वैद्यः - ''भोः, इदं क्षतं व्रणरूपेण परिवर्तितम् अस्ति । एतदर्थम् बहुमूल्यानि औषधानि उपयोक्तव्यानि । यदि भवान् विंशति-सुवर्णनाणकानि दद्यात् तर्हि अहम् औषधं निर्माय दास्यामि'' इति उक्तवान् ।

कर्मकरस्य गोविन्दस्य समीपे तावत् धनं कथं वा भवेत् ? यदि कश्चित् तस्मै ऋणं

दद्यात् तथापि सः कथं वा तत् प्रत्यर्पयितुं शक्नुयात् ? 'देवदासेन दीयमाना वेदना सह्यते चेत् सुलभतया धनं प्राप्तुं शक्यते' इति विचिन्त्य गोविन्दः देवदासस्य समीपं गतवान् ।

तदा देवदासः तम् उक्तवान् - ''अहं भवते विंशति-सुवर्णनाणकानि दास्यामि । परन्तु ततः पूर्वं भवतः व्रणस्य चिकित्सां कर्तुं मह्यम् अवकाशः दातव्यः'' इति ।

गोविन्दः यदा अङ्गीकृतवान् तदा देवदासः तं एकस्मिन् स्तम्भे तथा बद्धवान्, यथा सः हस्तपादं चालयितुं न शक्नुयात् । पश्चात् तस्य व्रणस्य उपरि लवणं, मरीचिकाचूर्णं, जम्बीरफलस्य रसं च स्थापितवान्, वेदनया क्रन्दन्तं तं दृष्ट्वा आनन्दितवान् च ।

अन्ते तस्मै विंशति-सुवर्णनाणकानि दत्त्वा तं बन्धमुक्तं कृतवान् । तदा गोविन्दः तस्मै पृष्ठे सम्यक् एकं प्रहारं दत्त्वा - ''अगतिकगत्या अहम् अधुना भवतः धनं स्वीकुर्वन् अस्मि । परन्तु कदापि भवतः दौष्ट्यं न विस्मरिष्यामि । इतः परं अहं भवतः वैरी अस्मि । प्रतीकारार्थम् एव अहं जीविष्यामि । भवान् एव मम परमशत्रुः'' इति उक्तवान् ।

देवदासः गोविन्दं यत् स्मृतवान् तस्य अन्यत् अपि कारणम् आसीत् । देवदासः चिन्तितवान् आसीत् - 'गोविन्दः मां तावत् द्विषति यत् सः कदापि मम उपकारं कर्तुं न इच्छति । अपि च सः दरिद्रः इति कारणेन साहाय्यकरणे माम् अतिशेतुं न शक्नोति' इति ।



एवं विचिन्त्य देवदासः महाराजं प्रति गोविन्दस्य नाम उक्तवान् । तदा ग्रामप्रमुखः कञ्चित् भटं प्रेषयित्वा गोविन्दम् आनायितवान् ।

तदा देवदासः महाराजम् उद्दिश्य - ''प्रभो, अहं यथाशक्ति गोविन्दस्य साहाय्यं करिष्यामि । किन्तु मया दत्तं किमपि तेन न प्रत्यर्पणीयम् इति सः भवता सूचनीयः'' इति प्रार्थितवान् ।

महाराजः - ''अस्तु, तथैव तं वदामि'' इति उक्तवान् ।

महाराजस्य, ग्रामप्रमुखस्य, अन्येषां ग्रामगण्यानां च पुरतः उभयोर्मध्ये सन्धिः सञ्जातः । तस्य पर्यवेक्षणकार्यं ग्रामप्रमुखाय समर्प्य - ''मासानन्तरं पुनः आगत्य समग्रां परिस्थितिं परिशील्य निर्णयं श्रावयिष्यामि''



इति उक्त्वा महाराजः प्रतिगतवान् ।

तस्मात् दिनात् देवदासे महत् परिवर्तनम् आगतम् । आदौ सः स्वयं गोविन्दस्य समीपं गत्वा - ''मम दोषाः क्षन्तव्याः भवता'' इति प्रार्थितवान् । अपि च 'इतः परं कदापि भवता सह एतादृशं दुर्व्यवहारं न करिष्यामि' इत्यपि वचनं दत्तवान् । पश्चात् तस्मिन् ग्रामे विद्यमानेषु स्वस्य भवनेषु एकं सुन्दरं भवनं गोविन्दाय वासार्थं दत्तवान् । तद्दिनाद् आरभ्य प्रतिदिनं गोविन्दस्य मनोरञ्जनार्थं विविधान् विनोदकार्यक्रमान् आयोजितवान् सः । गोविन्दं स्वगृहं भोजनार्थम् आहूतवान् देवदासः । अपि च गोविन्दस्य नाम्नि देवालये विशेषपूजां कारितवान् । मासस्य समाप्तेः पूर्वं देवदासः स्वस्य एकर्-द्वयपरिमितां भूमिं गोविन्दस्य नाम्नि लेखयित्वा - ''इतः परं भवान् एतस्मिन् एव गृहे वसन् एतत्क्षेत्रे कार्यं च कुर्वन् सुखेन जीवतु'' इति उक्तवान् ।

मासे अतीते सत्यपि गोविन्दः तु देवदासस्य प्रत्युपकारं कर्तुं प्रयत्नम् अपि न कृतवान् । तेन आश्चर्यचकिताः ग्रामजनाः 'गोविन्दः बहु स्वार्थी अस्ति । सभ्यताम् अपि सः न जानाति' इति चिन्तितवन्तः ।

यदा सन्धेः अवधिः समाप्तः तदा महाराजः सीतापुरम् आगत्य प्रवृत्तं सर्वं ज्ञातवान् । ग्रामप्रमुखः एकां सभाम् आयोजितवान् । तत्र महाराजः देवदासेन कृतानि उत्तमकार्याणि श्लाघितवान् । अनन्तरं गोविन्दम् उद्दिश्य - ''भवान् देवदासस्य कमपि साहाय्यम्, उपकारं वा न कृतवान्, किमर्थम् ?'' इति पृष्टवान् ।

तदा गोविन्दः मन्दहासपुरस्सरम् उक्तवान् - ''प्रभो ! प्रथमदिने यदा देवदासः क्षमां प्रार्थितवान् तदा एव अहं शत्रुत्वं विस्मृतवान् । अशत्रोः साहाय्यं करणीयम् इति तु नियमः नास्ति इति कारणेन अहं तस्य किञ्चिदपि साहाय्यं न कृतवान्'' इति ।

तस्य एतादृशम् उत्तरं श्रुत्वा सर्वे आश्चर्यचकिताः अभवन् । 'देवदासः तु अन्तपर्यन्तं गोविन्दं शत्रुं मत्वा एव उपकारं कृतवान् आसीत् । प्रथमदिने एव शत्रुत्वं विस्मृतवतः गोविन्दात् सः कथं वा श्रेष्ठः भवितुम् अर्हति ?' इति यदा सर्वे चिन्तयन्तः आसन् तदा देवदासः उत्थाय - ''अहं पूर्वं गोविन्दस्य हिंसां बहुधा कृतवान् आसम् । अतः एव सः मां शत्रुः इति

उक्तवान् । तादृशं शत्रुत्वम् अपि मम क्षमायाचनस्य समनन्तरम् एव अपगतम् । उत्तमवचनं मूल्यवत् भवति इति अहम् अद्य ज्ञातवान् । अहम् एतावन्ति दिनानि यत् दुष्टकार्यं कृतवान् तदर्थम् अधुना लज्जाम् अनुभवामि'' इति उक्तवान् ।

तदा महाराजः देवदासम् ''उपविशतु'' इति सूचयित्वा गोविन्दम् उद्दिश्य - ''भवान् देवदासविषयकं शत्रुत्वं परित्यक्तवान् यत् तत् योग्यम् एव । तेन कारणेन एकमासतः सः भवतः मित्रं जातः अस्ति । साहाय्यं कुर्वतः मित्रस्य प्रत्युपकारः करणीयः इति भवतः मनसि न अभासत किम् ?'' इति पृष्टवान् ।

तदा गोविन्दः - ''प्रभो ! यावत्पर्यन्तं व्रणः ज्वलन् आसीत् तावत्पर्यन्तम् एव मम देवदासविषये कोपः आसीत् । सः धनं दत्तवान् इति कारणेन एव मम व्रणस्य चिकित्सां कारयितुं शक्तः अहम् । अतः तस्मिन् मम कृतज्ञताभावः अद्यापि अस्ति । शाश्वतरूपेण समस्यायाः परिहारार्थं मादृशाः महतीं तात्कालिकीं वेदनां अपि सोढुं समर्थाः भवन्ति । अस्मादृशानां समस्यां ज्ञातुं राजा क्वचिदेव प्रवर्तते, तदा तदा न प्रवर्तते इत्येतत् तादृशीं वेदनां जनयति, या च देवदासादीनां पीडातः जातां वेदनाम् अपि अतिशेते । देवदासः यदि पराजयं प्राप्तवान् स्यात् तर्हि तस्य कारागारवासः विहितः अभविष्यत् । यदि अहं देवदासतः श्रेष्ठः भवेयं तर्हि एव तस्य पराजयः भवेत् । अतः एव अहं प्रत्युपकारं कमपि अकुर्वन् तस्य श्रेष्ठतां रक्षितवान् । ततः सः कारागारवासदण्डात् रक्षितः । एतत्सर्वं मम व्यवहारस्य कारणतः जातम् इत्यतः मया मित्रस्य महान् उपकारः कृतः अभवत् एव'' इति उक्तवान् ।

गोविन्दस्य औदार्यं मनसा अभिनन्दन् महाराजः - ''वस्तुतः अस्यां स्पर्धायां जितवान् गोविन्दः एव । तथापि गोविन्दस्य अपेक्षानुगुणम् अहं देवदासं क्षान्तवान् अस्मि । अपि च इतः परं गोविन्दसदृशाः धनार्थं देवदाससदृशानां समीपं न गच्छेयुः इति मम अपेक्षा । अतः दरिद्राणां निमित्तं राज्ये सर्वत्र निःशुल्कं वैद्यकीयादिव्यवस्थां कारयिष्यामि'' इति उक्त्वा स्वराजधानीं प्रति प्रतिगतवान् ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां मार्च् - १९९८ मासे प्रकटयिष्यामः ।



M.NATARAJAN



M.NATARAJAN

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-काई) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५

'नवम्बर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - सुषमाबाला वदति - वाञ्छामि सौन्दर्यस्पर्धां जेतुम् ।

द्वितीयचित्रम् - क्रीडनकं सूचयति - तिष्ठ भगिनि, आयामि त्वया सार्धम् ।।

प्रेषिका - श्रीमती सुषमा पारीख, वि.पि.ओ.रूपाहोली (डब्ल्यु.आर्.) भीलवाडा -३०५६२६ (राज.)




Printed by B.V. REDDI at Prasad Process Private Ltd., Chandamama Buildings, Chennai - 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, 188, N.S.K. Salai, Vadapalani, Chennai - 600 026 (India) Editor : NAGI REDDI.

अपने प्यारे चहेतें के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा




**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 129.00 वायु सेवा से रु. 276.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 135.00 वायु सेवा से रु. 276.00

**अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा**
**'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिएः**

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

